*Pathakamukhavisphotakam*; Rs. 5,(the Sanskrit work which causes by its wit and humor the readers' mouth to become and remain wide open) has been written by *Sri Rup Lal Kapur* in a mood of radiant enjoyment of life emanating from a humorous outlook on life.

*'And sport which wrinkled care derides'*
*And laughter holding both his sides.'*

*Such humorous books are rare in Sanskrit and are equally rare in modern Indian languages. I commend this interesting and admirable work heartily to all Indians.*

*DEWAN BAHADUR K.S.RAMASWAMI SASTRI.*
*(Retd. Dist. & Sessions Judge')*

पण्डितराज मीमांसाकेसरी श्री कै. बालसुब्रह्मण्य शास्त्री प्रिन्सीपल संस्कृत कालेज मैलापुर, मद्रास,

श्रीमता विचक्षणवरेण्येन रूपलाल कपूर महाविद्येन 'हाच पाच' प्रभृतीनां हास्यरसप्रधानानां आङ्ग्लमयप्रबन्धानाम् प्रणेत्रा विरचितमिदम् गीर्वाणवाणीमयम् पाठकमुखविस्फोटकादिभिः पञ्चदशप्रकरणभेदैः गुम्फितं प्रबन्धरत्नम् समीक्षण पथमागतम् परिशीलितञ्च । सर्वत्र प्रयुज्यमाना सरला दैवीभाषा न केवलम् आशयम् हार्दं स्फुटम् अवगमयति परंतु व्याकरणपथाद् ईषदपि नाति क्रान्तम् दुरवगाहलुङन्तलिङन्तप्रयोगप्रचुरं प्राचाम् भाष्यकाराणाम् शैलीमनितरसाधारणीमनुकरोति नातिविस्तरैर्वाक्यजातैः । प्रतिपाद्यो विषयः कथाभागश्च हास्यरसप्रधानः धर्मसंस्थानान्तर्यकः वैदिकानाम् लौकिकानाञ्च सुधियाम् सुमनसस्समावर्जकः-

चकास्ति। भाषाशब्दैन प्रतिपाद्यार्थेन व्यंग्यहास्यरसेन च समीचीनेन समलंकृतः समावर्जयति सुधियाम् सुहृशः सुतराम्। 'सुलभम् नराभँसुरम्' नाटकमिदम् सप्तभिरङ्कैः निबद्धम् [illegible] । काव्यकुञ्जे ऽस्मिन्से स्वच्छन्दश्लोकाः सुश्लोकाः श्राविताः। अव-सानमिमन् प्रभाव्य 'धर्मपथीनाः युष्यध्वम्, धर्म्ये मार्गे योद्धव्यम्' इत्यात्मकम्, धर्मदेवता प्रणेतुः प्रणीतस्य च दीर्घमायुः विपुलम् यशश्च देयात्, इति समर्थनया [illegible]ऽनेन जनेनेति शिवम् ॥

# शुद्धिपत्रम्

१–६ सम्पूर्णतम्–सम्पूर्णम्, ८–५ वैशेशिक–वैशेषिक [illegible]–५ सुजीव्या–सुजिष्वा, २१–५ अयँ विवरः अंत-लीनकुम्भीनसः–इदँ विवरं अंतर्लीनकुम्भीनसँ, ३०–३६ तेषामग्रे–तेषामग्रे, ३३–२३ मति–मतिः, ३७–२ यद्यु–यद्युः, ३७–४ एवमस्माकँ–एवमस्माकँ, ३७–८ गुष्द–[illegible] ३६–३ यदा–यदि, ४५–२४ सील्–सील, ४८–[illegible] स्थाथा, ८८–३ विधान–विधानानु, ६०–३ [illegible]स्मिन्, ६१–१० पँगेन–पँगेण, १०६–२१ चेत्–चेत, १०७–५ विशेषँ–विशेषेण, १०८–२ सहैको–सहैकः, १०६–११ आसीद्–आसीत्, १०६–२३ प्रचय:–प्र-चय:, [illegible]–८ सुपथा[illegible]वी – सुपथाध्वनी, ११२–१३ [illegible], ११२–१४ ल–स, ११७–८ समापित–समाप्त. ८–१५ अयस्प्राप्त – अयःप्राप्ति. २६–६ चेदान्–चेदम्. ६६–५ समूलो–समूल. २२४–२० [illegible]–तस्मै, २५३ है–हैह्. अन्ये ऽपि काश्चिद् साधारणाः मुद्रणाशुद्धयः पाठकैः स्वयमेव शोधनीयाः ॥

# पाठकमुखविस्फोटकम्

रूपलाल कपूर

प्रणेता
मौद के मोदक, रूप खड़ाँ (उर्दू), चानन चौह (पञ्जाबी)
*Hotch Potch, Tittle Tattle, Scientific Humour, The Third Religion. The Last Prophet, My Heavy Days.*

प्रकाशक :- भारती निकुञ्जम्, न. ६, डी. मैलोज़ रोड
मद्रास-१२.

# विषयविशेषानुक्रमः

ॐ

# पठकमुखविस्फोटकम्

गतो वासरः अवतीर्णा यामिनी । अवसितम् आत्याहिकम् कार्यम् । निशागमे सर्वतः प्रसृतः गाढ़ान्धकारः । गृहकपाटमर्गलम् दत्त्वा गेहस्य उपरितने प्रकोष्ठे यत्र मया स्वार्थं शयनागारं कल्पितमासीत् आगत्य पर्यङ्कोपरि संस्तरमास्तीर्य शयनं विरचय्य शयने कृतपदः पार्श्वद्वये मुहुर्मुहुर्लुठन् नयनद्वितयमामिलन् अहमुपाश्रयावलम्बेन स्थितः निद्राम् प्रतीक्षमाणः । मृदुकमनीये अस्तरणीये उपबर्हमाश्रित्य कञ्चित् कालं विश्राममतनवम् निद्रामलभमानः उच्चैः स्वनत् गृहदिवेलामाख्यायकम् निशाकालस्य वहद् कतिचित् क्षणानि व्यतीतानि निद्रा च नायाति स्म मे नेत्रे । अहं स्वापं नापम् निद्रासुखमुपभोक्तुम् प्रवृत्तोऽपि । शनैःशनैरहं निद्रयाभिभूतोऽभूवम् । मां सुषुप्ति-राक्राम । निद्रयापहृतोऽभूवम् । पक्ष्मलसंस्पर्श-शयनीयेसोपधानेशयितोऽहंस्वापसुखमन्वभूवं कञ्चित् समयम् । तल्पोपरि कोमलशयने निद्रया गृहीतस्य मे घटिकाद्वयं क्षणदाया गतमभूत् । पयोधिफेनपाण्डुरे शयनीये निद्रयापहृतचेतनोऽहं कालमत्यवाहयम् यावत्सर्वेषु गेहेषु दीपा निर्वाणतामभ्युपेताः सकलञ्च नगरं तमिस्रायां गाढ़े ध्वान्ते न्यमज्जत् । सर्वत्र च प्रशमोऽभूत् । एकोऽपरं नान्वभूत् । अखिलबाह्येन्द्रियोपरामे निखिलो दैनिककार्यजातश्रमो व्यपनुदत । एवं गाढ़निद्रोऽहमभूवं यदहं स्वजानाम किमपि वाञ्छ

विषयम्। निद्रां सेवमानस्य मे कतिपयानि स्वप्नसंदर्श-
नान्यजायन्त। प्रस्वापसुखमनुभवन्नहमेकमतिमात्र-
रम्यं स्वप्नं पश्यन् संस्तरमध्यासीनः किंचिन्निनादम
शृणवम्। किमिति स्वप्नोऽनुभूयते मया उत वा सत्यं
कश्चिद् कपाटमाहत्य द्वारपक्षं ताडयतीति। सन्देहो-
न्मथितहृदयोऽपि अहन्निद्राचारी निद्रापरवशः
नोत्थातुं प्राभवम्। मा मे निद्राभङ्गो भूः इत्यत्राहम-
काङ्क्षम्। परंतु कोलाहलस्तमैधत। अहं भग्नस्वापो-
ऽभवम्। न मया निरवेशि निद्रासुखं सम्पूर्णम्।
बधिरीकृन्निनादभयाक्रांतः अजहाम् शय्याम्। त्यक्त
शय्यश्चाहं प्रबुद्धो प्रचलायितो नयने परिमृज्य स्खलत्
पादाभ्यां वातायनसमीपमागच्छम्। उत्थानानन्तरं
अंचिताक्षिपक्ष्मा चकितचकित इव विशिथिलांगयष्टिः
वातायनकपाटमुद्घाट्य बहिर्दृष्टिं न्यक्षिपं विधूतनिद्रः
सन् जातश्चाहं विस्मयाक्षिप्तहृदयः, अनपोढागलऽगारे
विसृष्टतल्पः यदहं तदापश्यं तत्तु मम वर्णनशक्ति
रिणक्ति। यद्यपि तमिस्रा दृष्टेरावरणायोकल्पत् परंतु
वीथ्यायां देदीप्यमानैर्विद्युद्दीपैर्विच्छुरितेऽन्धकारे
यदहमद्राक्षन्तत्तनुवाग्विभवस्य मे शक्तिमतिक्रामति।
परःसहस्रैः मनुष्यैर्मामभिपतितुम् मां विचिन्त्य रुद्ध
मम गृहं परिवृतम् अधुना गृहे पर्यङ्कमधिशेते न
कापि कार्यप्रसङ्गवशात् बहिर्गतःस्यादिति मन्वानः तैः
निशीथसमयः स्वकार्यनिष्पत्तये सम्यगुपयुक्तः
विभावितः। वानीरगृहे सुप्तस्य मम किमिदमापतित
मिति मनो मे कौतुकितमभूत्। कोऽयं वीथ्यांत-
प्रतिनादितः महास्वनः किमर्थश्च। तेषां कोपहेतून्
विचिन्वतो मम एवंविधे समये किमपि बुद्धिस्फुरणं

नाभूत्। परिकोपमिताः ते मां परुषाक्षरैस्समतक्षन्। ततः दशोभनमापतितम्। अहं तु अत्यन्तं दुरुक्तोऽभवम्। न शोभनमभिहितं तैः मम प्रति किमपि। हतान् उद्युधानापततस्तान् प्रेक्ष्य भीराविशन्माम्। समिद्ध-मन्यूनां दुर्विनीतानामुद्दामवृत्तीनां रथ्यापुरुषाणामेष समूहः स्व व्यूढस्य बलस्य प्रदर्शनं कर्तुं कथं मम गृहमागत इति न व्यजानाम्। ज्ञातुञ्चोत्कंठित आसम्। एषु उद्भूतकोपाटोपेषु एको लगुडं प्रगुणीकृत्य मम शिरसि प्रहारं कर्तुमागतः। अपर उद्यम्य दक्षिणं दोषं मम गृहभित्तिरिष्टकासु शस्त्रमपातयद्येन् उद्यन् अग्निः खद्योतरुचं प्रापत्। केचित् इष्टकालोष्टपाषाण-हस्ता ममावस्कन्दाय तत्रायायुः। सद्यः तत्क्षणजात-कोपावेशेन इष्टकालोष्टास्तेषाँ हस्तेभ्यः सममिवोद्ययुः पटले स्थितँ मां निपीड़ितुं हन्तुम् वा असमर्थास्ते अनर्गलमब्रुवन्। एको जगाद् यदि त्वं हर्म्यतलादवरोहसि त्वाँ तिलशः खण्डयिष्यामि, अन्य एकोऽब्रवीत् यदि त्वं मम हस्ते पतिष्यसि त्वां खण्डशः करिष्ये। अपर उवाच अहं त्वां उच्चाटयिष्यामि परशुना तवोत्तमाङ्गम् हरिष्यामि तव घोणाँ छित्त्वा वैरूप्यपौनरुक्त्यं करिष्यामीति हृदयविहितवैरा निर्मर्यादाः ते अब्रुवन्। केचित् काचं प्राक्षिपन्॥

कथमेषामकारणँ वैरमासादितं मयेति अहमचिंतयम्। प्रतिप्रहाराद्धम उपसवाशङ्कया विविग्नः किंकर्त्तव्यतामूढ़ः जातोऽहम् कार्यपदवीं न प्रत्यपद्ये। तैर्विप्रकृतोऽपि न्यक्कृतोऽपि कष्टश्रितोऽप्यहम् प्रतीकारे ऽप्रगल्भमानः निःसहायः स्थितः विपज्जाल-सुप्रेक्षमाणो मौनोऽभवम्। यदा क्रोधाविष्टा पुरुषा

इह ममाचरितुमुचिता भवन्ति वेतालीसदृशा इवा विस्मयोत्तुङ्गधैर्य्या जायन्ते तदा तेषां समक्षे मौनं परम् एकोऽपि शब्दस्तावदस्फुरितस्तेषां कोपहुताशनं वर्धयेत्, यथा प्रज्वलितो वह्निरेकेनापि नवकाष्ठेन प्रदीप्ततरो जायते। एकोद्गारस्यापि उच्चारणेन ते प्रकृष्टरुषा जायन्ते सम्भ्रममापतन्ति निःश्वसन्ति च। एवमनर्थाधीनोऽपि प्राचार्य्योद्भेदस्य संशये पतितोऽहम् हतवीर्य्योऽभवम्। तेषां मर्मविधा उक्तयो भृशम् अक्षिणवन् मम हृदयम्। तेभ्यः बिभ्यत् न किमपि वक्तुमशक्नुवम्। भिया गृहीतान्तःकरणोऽहम् न किमपि प्रष्टुमपारयम्। तदा तेषु एकेनेत्थम् भाषितम् 'रे दुर्जनाग्रणीः किमिदम् पुस्तकं त्वया ध्वरन्ति पठक-मुखविस्फोटकमिति न ? भृशमन्यं त्वं ते तुण्डन् कस्त्वमस्माकं मुखं स्फोटयितुम् क्षमः ? त्वं तु मक्षिकायाः चरणमपि त्रोटयितुम् न समर्थः। किमेतत् असमञ्जसं वक्षि ? अस्माकं समक्षे किमसि त्वम् ? वयं तव भङ्क्ष्यामः जानू, त्रोटयामः चोरू। कस्त्वं अस्मान् इत्थं धर्षयसि ? तुच्छातितुच्छकृमि-कीटसन्निभो जन्तुः। दौरात्म्यं ते आधिक्यं गतम्। वृथा विभीषिका क्रियते त्वया। विरमाऽतः परम् वाक्-प्रसङ्गात्' इति सद्भावनाहृदयाः ते प्रोचुः॥

अवगतम् तत्त्वम्। मत्पुस्तकाभिधेयं हेतूकृत्य ते रोषङ्गताः मां संप्रहर्तुं समनह्यन् क्षुभ्यन्ति च क्रुध्यन्ति च महान्तम् दुर्मनायन्ते च। अयं तु तेषां बलवान् बुद्धिविपर्ययः। अस्तु। तेषामावेशादात्मानं रक्षितुमस्ति उपायः यमाश्रित्य अहं अनल्पासोऽपि वधपरिहाराय समर्थः स्याम्॥

अहमचोत्रम् 'पठकमुखविस्फोटकम् नाम पुस्तक .मया व्यलेखि केवलं परिहासाय' ।

तदा तद्विवेकस्य प्रत्युत्पन्नमतेर्मतिरस्फुरत् । स .....गत् 'अवगतं मया । योऽस्माकं मुखे स्फोटः वास्तवः ....न वा कल्पितो तस्य परिहासायैव अनेनेदं पुस्तकं लिखितम् । स्फोट एव विस्फोटः यथा विकरालः इति विशेषेण करालः, व्याकुलः इति विशेषेण आकुलः । अपरञ्च विस्फोट एव विस्फोटकः । 'स्वार्थे कन्' इति पाणिनि स्माह अष्टाध्याय्याम् । कुमार एव कुमारकः, उष्ट्र एव उष्ट्रकः, अश्व एव अश्वकः' ॥

अथ तद् जनकदम्बः विवृद्धमत्सरः समजायत । तेषां प्रकोपाग्निः भूय उद्दीप्यत विमर्दशङ्का चावर्धत । ते सामर्षतया ममोपरि प्रस्तरान् मृत्तिकालोष्ठान् प्राक्षिपन् । अस्माकमुपहासः अनेन प्रक्रांत इति निर्धार्य तेषां समतप्यतांतःकरणम् । असीदत् हृदयं तेषां प्रज्वलंश्चाङ्गानि रोषश्च तेषामुत्तरोत्तरं प्राचीयत । मम ....आगारञ्च प्रस्तरैरभ्यघ्नन् क्रोधाद्दंतान् संसांपयन् ममोच्छेदञ्चाचिंतयन् । इत्थञ्च तेऽवैराथंत ....रञ्च तैः शत्रूयितं मयि यदहं स्पष्टं व्यभावयम् पावकेन समक्रीडे इति भयञ्चाव्रजम् । ते तु क्रोधांधाः तीक्ष्णा अभ्याचरन् । मां प्रति तेषां विद्विषाग्निः उत्तरोत्तरं समुदज्वलत् । सद्यः प्राप्स्यसि अस्माकमुपहासस्य फलमिति त ऊचुः । परंतु अहं पटलोपरि स्थित आसम् अतः तेऽपारुन्धन् अपावदंश्च । तैः मां प्रति प्रयुक्तमपि अङ्गं वृथा स्यात् । तैः कृतो मर्मभेदी न्यक्कारो मम ...गलंसीत् । तैः सम्पादितस्य सङ्कटस्यापनयनं मयि आपतितम् । अतः मया प्रस्तावानुकूलं समाचरणीयः

मानीत। परंतु बोपेनानंद व तातप्रमाना मूढधियः सहसा विवेकं ग्राहयितुम् न शक्याः। सम्यक् ज्ञान आसीन्मया तेषां दुराग्रहस्य कारणम्, मनस्तोषपादनाय उपायमास्थानवधीमसीन्मय। अतः शङ्कातङ्कनपास्य मयेत्थं प्रकांतम् 'शृणुत सुहृदः! अहम् अस्मि हास्यरसलेखकः। आङ्गलभाषायामहं व्यरचयं प्राकाशयं च हास्यरससम्बंधीनि पञ्च पुस्तकानि हाच पाच (Hotch Potch), टिटल टटल (Tittle Tattle), साइंटिफ़िक ह्यमर (Scientific Humor), दी थर्ड रिलीजन (The Third Religion), दी लास्ट प्राफ़ट (The Last Prophet) इति नामानि सी. एल. रूपर्ट इति कर्तृनामाङ्कितानि। इदं सी. एल. रूपर्ट इति मम नाम्नः आङ्गलभाषया रूपांतरापादनम्। सी. एल. रूपर्ट [C oper Lyall Rupert] इति रूप लाल कपूर इति ममाभिधेयस्य आङ्गलीकरणमात्रम्। तत् पश्चात् हिंदीभाषायाम् एकं पुस्तकं 'मोद के मोदक' नाम्ना अहं निरमाम् प्राचारयं च। तस्मिन्नपि ग्रंथे निर्मूलानि जल्पितानि संति। अहं तु केवलं गप्पवादी नान्यत् किंचिद् विजानामि। इदानीं तु संस्कृतभाषायाम् हास्यरसग्रंथानां सर्वथा अभावाद् हास्यरसोद्रेकायाहं 'पठकमुखविस्फोटकम्' प्रकृतोऽस्म। भवंतः मादृशेषु कल्यागमनेषु वृथा कलुषितं चेतो बिभ्रति। कुशं काशं वावलम्ब्य भवंतः मया सह मुधवाकलहायंत व्यर्थं चाकष्टायंत। मया तु अस्मिन् पुस्तके गप्पावली लिखितास्ति नान्यत्किमपि। गप्पप्रलपनएवाहं कालमनयम् पुस्तकस्यैतस्य प्रणयने। आरम्भात् अवसानपर्यंतं गप्पा एव आस्तिकीकृताः। गप्पः

सहोदरोऽपरो गण्यः इत्यतोऽत्र पुस्तकमिदम् संदृब्धम् मया। हास्यरसस्यांगीकरणायैव इमं ग्रंथं रचितवान् अहम्। युष्मानुल्लासयितुम् प्रयते। युष्माकं मुखं प्रसह्य स्फोटयितुं न मया किमपि प्रासव्यम्। परंतु यथा बम विस्फोटे जाते तदंतर्निहिताः पदार्थाः सुदूरम् उड्डीयंते तथैव हास्येन मुखं स्फुटति ग्रीवपृष्ठतः दूरम् उड्डीयंते, लाला स्रवति, नासा प्रस्रवति नयने चाश्रुः च्युतं जायेते अतः पुस्तकस्य नाम 'पठकमुखविस्फोटकम्' इति विहितं मया। नाहं किमपि युष्माकम् दौर्मनस्याय कृतवान्। अतोऽस्माकं वैमनस्यं वर्त्तु सौहार्दं चास्तु इत्येव प्रार्थये॥

सम्पन्नः तेषां मनसः प्रसादः। प्रशांतरोषाश्च सञ्जाताः ते सर्वे मृदुतामगच्छन्। भूयिष्ठमहसन् ते। स्वनवदहसन्। सहस्ततांडमहसन्। प्रोच्चकैः प्राहसन् अशांति हासैः शांतिं एवंविधेन दृष्टाकर्णनेन तुष्टाः अनुकूलश्रवणेन प्रतीताः प्रसन्नवदनाः ते सर्वे स्व २ गृहं प्रति गंतुमुपचक्रमिरे। मम गृहात् अतिसंहृतचक्षुषः ते गंतुम् प्रारब्धाः। मत्तः निवर्तितदृष्टयः ते शनैः २ दृष्टिपथं व्यतीता अभवन्। ममापि मानसं शनैः प्रसादम् अगृह्णात्। बहुलीभवतोऽनिष्टस्य निवारणे तांश्च परितोषयितुम् सफलीभूतो मम प्रयत्नः। उच्चावचान् विकारान्निमितोऽसौ वीतभयश्च जातः॥

उपनता रात्रेः पश्चिमा यामा। एकवारं अहं तल्पम् औज्झम्। पुनश्शय्यारूढः निद्रां न प्रापम्। बहुकालं क्षपायाः क्षपितवानहम्। व्युष्टा रजनी। अहमुत्सन्ननिद्रः सञ्जातः। यामिन्यां चरमेभागे उपधानन्यस्तः भुजलतावष्टम्भेन अहं तल्पेऽवस्थितः। अतोऽहम्

विचारे निलीनोऽभवम् किमस्य दुर्ज्ञातस्य कारणमिति जिज्ञासा मां अचोदयत्। कारणगुणाः कार्ये संक्रमिताः तिष्ठंति। यादृशाः कारणेषु गुणाः संलक्ष्यंते तादृशा एव कार्येष्वपि भवंति। कार्यः कारणस्वभावः। कारणगुणपूर्वकः कार्यगुणो दृष्टः [वैशेशिकदर्शन — अ.२ – आ. १ – सू. २४] क्षेत्रेषु पशुपक्षीणाम् गोमय विष्ठापुरीषं यवव्रीहिगोधूमादिधान्यस्य समुद्भव उत्तेजकद्रव्यत्वेन प्रक्षिप्यते। गोमय विष्ठा धान्यस्योत्पत्तौ वृद्धौ कारणम् । कारणस्य गुणाः कार्ये संनिविष्टाः तिष्ठंति अत अन्नं बुभुक्षादि पशुपक्षि प्राणिनाम् जठरपिठरे प्रविश्य गोमय विष्ठारूपेणाथ निष्क्रामति॥

कारणगुणाः कार्ये समाविष्टाः दृश्यंते। अनिष्टफलपरिहाराय तस्य कारणं ज्ञेयं। यत्नमातस्तत्कारणं परिवर्जयेच्च। विचारमग्नोऽहमित्थं निरचैषम् यत् श्लेष एवात्र कारणम् । यथा स्वगृहाद्भ्रष्टः कपोतो यस्मिन् कस्मिन् गृहे कपोतं पश्यति तत्रैव अवतरति एवं सफोटं दृष्ट्वा वैयाकरणस्य स्फोटः आयातः। तत्र पठकानां मनसि विस्फोटशब्दस्य वियोजनात् अत्र द्वितीयार्थस्य स्फोटः कृतः। यत्र बमविस्फोटः जायते तत्रस्थाः विप्रकृष्टा वापि पदार्थाः स्फुटंति, त्रुट्यंति, भिद्यंति च। पठकानां मनसि स्फोटे जाते तेषां मनांसि प्रस्फुटितानि अजायंत। मम शिरोऽपि स्फुटितोऽभवि-ष्यद्यद्यहम् छदिष उपरितले स्थितो नाभविष्यम् । पुस्तकनामधेये गतो विस्फोटकशब्दः स्व विश्लिषणः विभेदनरूपं कार्यं कृत्वा विरतः । अत एव कीथ-महोदयेन स्वरचित ,हिस्ट्री आफ क्लासीकल

संस्कृत लिटरेचर' नाम्नि ग्रंथे इत्थमभ्यधायि 'श्लेष-प्रयोगः कुरुचिं द्योतयति । श्लिष्टशब्दानां प्रयोगेन लेखकस्य कुरुचिः ध्वन्यते। श्लेषालङ्कारस्य प्रयोक्ता साहित्ये आत्मनः कुरुचिमेव व्यञ्जयति' ततः कीथ महाभागः राघवपाण्डवीयम् दृष्टांतयति यदादितो-ऽन्तपर्यंतं श्लेषपूर्णमस्ति । तस्य लेखकश्च भृशम् अकुत्सयत् यद्राघवपांडवीयकर्त्तुः नामापि याथार्थ्येन न ज्ञायते इत्यत्र तस्य श्लेषप्रयोगमेव हेतुत्वेन उपन्यास्थत् ॥

विभावरी विरामं याता। संनिहिता प्रभातवेला। मरीचिमालिना संशोधिते अंधकारे मम गुरुश्चिन्तन-मपि अंतङ्गतम्। रविकिरणविभिन्नतमिस्रं दिनं रजनिजनितजागरकषायितनेत्राभ्यामभिनंद्य अहं आह्निककार्यपर्यवेक्षणं प्रारब्धवान् ॥

---- * ... * ... * ... * ... * ... * ... * ...

एकः धार्मिकः जन मार्जनीमादाय किंचित्स्थानं परिशोध्य मृत्तिकामार्जनेन च पात्राणि संशोध्य प्राङ्गणे हंसंतीमाधाय भक्तं संस्करोतिस्म। पयेः मा दुषद् इति पथः अपितवान् ततः शाकस्य रंधनसमये दर्वीमादाय तं प्राचालयत्। कदापि इंधनं वा अचालयत्। चलितैन्धनो वह्निः भृशम् उज्ज्वाल। यदा शाकः अंगारेषु पापच्यमान आसीत्तदा स गोधूमचूर्ण मादाय जलं तस्मिन् संमिश्र्य कराभ्याममृद्नात्। तेन पिष्टेन रजीषोपरि रोटिका अश्रीणात्। विविधान्नोपदंशव्यञ्जनपानयुतं लवणमिष्टाद्यनेक-रससंभृतमशनमसाधयत्। प्रभूतशुण्ठ्यादिभिः संस्कार्य पुष्कलं घृतशर्कराप्रागं सिद्धमन्नं पायसं चिक्कणं पदार्थं लेह्यचोष्यादिकञ्च यं दृष्ट्वा मनुजः अश्नाया विरहेऽपि अश्नीयादेव चषकेषु संस्थाप्य समीपे न्यधात्। तस्यैकः सुहृत्तत्रागात्॥

'भवतः दैनन्दिनस्य कार्यश्रमस्य इदं फलं यदीदृशं विशिष्टं स्वादिष्टं च भोजनं भुज्यते भवद्भिः' स उवाच

'नेदमस्माकम् परिश्रमस्य फलमपितु भगवदनुग्रहस्य। भगवदनुग्रहं विना पुरुषार्थः सर्वः निष्फलो जायते। ईश्वरानुग्रहं विना न किंचिदपि प्राप्यते। प्राप्तमपि च विनश्यति। चोरितं लुण्ठितं वा भवति। भगवदनुग्रह एव केवलमेकं शरणमस्माकम्' इति स प्रत्युवाच॥

तस्मिन् क्षणे पाककर्म समाप्तम्। अधिश्रयणीतो यावदेव ज्वलतोऽङ्गारान् एकैकशः कङ्कमुखेन धृत्वा निर्वापयितुम् भूमौ चिक्षेप तावदेव वर्षाकणिकाः पेतुरङ्गाराश्च प्रशान्ता जाताः॥

पश्यँतु ममोदरि भगवदनुग्रहस्य प्रत्यक्षं प्रमाणम्। यावदेव पाकः निष्पन्नः अंगाराश्च जलेन प्रोक्षणीया आसन् तावदेव परमेश्वरेण स्वयमेव ते प्रोक्षिताः निर्वाणश्चानीता इति स व्याजहार॥

युष्माकमखिलँ भोजनमपि जलसंप्लुतञ्जातम्। तदपि यूयँ भगवतोऽनुग्रहस्य फलँ मन्यध्वे इति सः अपृच्छत्॥

भगवतो बुद्धिमत्त्वँ,प्रेक्षावत्वँ दूरदर्शित्वञ्च यूयँ न वेत्थ। भोजनादनँ निर्वर्त्य जलपानस्य स्पृहा जायत एव।भोजनेन सह जलपानमावश्यकम्। सर्वं तद्भोजनञ्जलञ्च उदरे पाकाशये गत्वा सँमिश्रितँ भवत्येव। तदपि भगवतास्वेन महदनुग्रहेण मत्कृते निष्पादितमिति स प्रत्याह॥

ॐ

# नागानिर्मोकः

अयि भगवति ! चुल्लिकायां काष्ठानि सञ्चित्य करीषँ निक्षिप्य अ.ग्र प्रज्वाल्य भोजनँ साधयेत्या- दिदेश कुबेरदत्तः सस्नेहम् स्व कन्यकां द्वादशहायनीं निजगृहाभ्यँतरे महानसे सुखमुपविष्टः यत्रैकास्मिन् कोणे तस्य भार्य्या सुनीतिदेवी मँथान्यां दधि मथ्नाति स्म नवनीतम् । अपरा चतुर्हायणी कन्या क्रीड़नकैः पुत्तलिकाभिः क्रीड़ति स्म ॥

भगवती रसवतीमध्ये तथेति प्रतिपद्य पितुरादेशँ पालयितुमारब्धा । चुल्हौ अग्नौ प्रदीप्ते भगवती पिष्टमुपसृत्य तांपेकां अग्निप्रज्वलितचुल्ह्योपरि निधाय रोटिकानिर्माणे व्यापृतवती ॥

द्वित्रवर्षानँतरं तव परिणयो भवितेति त्वामन्नपाक- विद्यां शिक्षयितुमस्ति मे मनीषा । पाकविद्यायां नैपुण्यँ प्राप्नुया इत्येव मे अभिलाषः ः इयँ कर्पट्टिका दग्धा इयञ्च कर्कशा जातेति माभूत्तव परिवादः श्वशुरगृहे । न कश्चित्त्वामुपालभेत । अतः मदध्यक्षतायां भोजनँ पचेति न्यगदत् कुबेरदत्तः स्नेहभराकुलया दृष्ट्या तां निरीक्षन् ॥

चुल्हौ काष्ठानि ज्वलन्ति स्म । परन्तु अग्निज्वाला मन्दा- जायत भगवती सदंशिकामादाय काष्ठानिचालया मास । चालितेंधनोऽग्निः भृशञ्ज्वाल ॥

सुनीते ! कालशेयमानयेत्यादिशत् कुबेरदत्तः स्व भार्य्याम् ॥

शीटिका निर्माय भगवती शाकं कर्तितुम् प्रवृत्ता ॥

इमैः शस्त्रैः कुंठिताग्रैः । न सम्यक् कृंतति । यथा तथा कुरु । दीर्घातन भोजनाय।पि शाकमधुनैव पच । इत्थं इंधनमधिकं न व्ययितं भवतीति अवदत् कुबेरदत्तः ।

य तयामः श्या।णः शाकः शुष्यति पूयते च कलया । अवादीत् सुनीति ।

'न तु शुचौ न शरदि । अयं शरद् ऋतुः' उदतरत् कुबेरदत्तः । 'ग्रीष्मे क्षुधा नाधिकं बाधते । तस्मात् अस्त आत्मा। रमधिकधनव्ययाद्रक्षितुमुपायः' ॥

'एतादृशं कार्पण्यं न युज्यते त्वयि' सुनीतिः व्याजहार साधिक्षेपम् ।

इदं तु स्वास्थ्यस्यानुकूलं । घृतसितामिश्रमन्नं यदि अधिकं भुज्यते न पच्यते । साधारणंघृतनवनीतापेतं शुष्कपधितमपि खाद्यते पच्यते । परमात्मना एष नियमः प्रवर्तितः यदुभयपक्षे समानो धनव्ययो भवेत । अतः परमात्मापि न वाञ्छति अस्माकमधिक धनव्ययम् । अहं तु तमेव भगवता प्रचालितं नियम-मनुवर्ते । तेनैव चात्मानं नियमितुम् यते' प्राह कुबेर दत्तः विकसितनयनः । 'अहं तु किंचित्पयः पातुमाका ङ्क्षामि । श्रोणीहि पयः । नाहमभिलषामि कालशेयम्' पुनराह स किंचिद्विरामानंतरम् ।

दशाति मंगालस्य नेत्रदंडम् । दधिमथनमसम्भवं जातम् । न्यगदत् सुनीति ।

भगवत्या अश्रुतं नक्तकेन पूतं पयः चुल्ही न्यधीयत । निहितमभूद्यावत्तावत्स शाककर्तने आत्मानं व्यापारयत् !

मुहूर्तद्वयानंतरं कुबेरदत्तः अपृच्छत् पिपासा-

कुलेन स्वरेण 'किं श्रुतं त्वया' ?

'अ.म्.श्र.ति वह्नौ' भगवती प्रोह। क्षणानन्तरं अर्पितं पयःचषके समर्पितवती पितरं भगवती।

कुबेरदत्त प्रीतिविस्फारितचक्षुषा तामभिवीक्ष्य पयः पीत्वा तृप्तो भूत्वा आस्तरणम् स्तृत्य बाहूपधानी कृत्वा शिश्ये। भगवती प.क. क्रयाँ व्यतनोत् ॥

कुबेरदत्तः भूमिभुजः वृत्तिमाश्रित्य पितृधनस्यानुपजीवनेनानुपघातेन वा किंचिद्धनं स्वयमर्जितवान्। मृते पितरि पितृ निष्पादितेन विभागपत्रानुसारेण स्व भ्राता समं विभक्तः पित्र्यं रिक्थमासाद्य पश्चात् स्व श्वशुरादौद्वाहिकं किमपि अर्थं लब्धवान्। पित्र्यस्य अर्थस्य स्वयमुत्पादितेन औद्वाहिकेन् धनेन च मिश्रणं कृत्वा तस्मिन् स्व पत्न्या यौतुकमपि धनं संस्थाप्य तद्धनसञ्चयात् शोधनपुरनगरोपाँतिके भूमिं काञ्चित् क्रीतवान् नगरे भूमिमूल्यमधिकतरं भवतीति कारणात्। किंचिद्धनमवशेषयत्। नगरे चैकं भवनं भाटकेन गृहीतं तेन। तस्मिंश्चैकं भोजनालयं स्थापितवान् कर्मकरांश्च कतिपयान्नियुक्तवान्। अवशिष्टेन धनेन भोजनालये उपयोगिनीं सामग्रीं अक्रीणात्। भोजनालयद्वारा अर्थसमुत्थापनेनात्मनः कुटुम्बं यस्मिन् द्वौ पुत्रौ द्वे च दुहितरौ आसन् बिभर्ति स्म ॥

तस्मिन् सद्यो निर्मितगृहे कुबेरदत्तः सकुटुम्बः वसतिचक्रे। तस्मिन् गृहे चत्वारः कोष्ठा आसन्। गृहस्य पश्चात् पृथक् किंचिद् दूरवर्ती एकः कोष्ठः तेन निर्मापितः भृत्यानामावासाय। इदानीं न कोऽपि प्रेष्यः तमधिवसति स्म। कोष्ठाभ्यंतरे एका खट्वा द्वारादं

द्वारागमनमार्गमवरुध्य कोष्ठस्य प्रमुखभागे एव स्थितासीत्। प्रतिदिनँ कुबेरदत्तः गृहाद्भोजनालयँ आहारगृहाद् गेहँ यातायातमकरोत्। भोजनालये स्वस्यासंन्निधाने स भ्रातृव्यँ स्व स्थाने नियोजयामास भोजनालयकार्यंजातपर्यवेक्षणाय। भोजनालये तस्मिन् फाएटँ मिष्टान्नं मोदकपेटकादिकँ मांसम स्य-ण्डिस्याः वयञ्जनचोष्यहे ह्यादिकमपि उपलभ्यते स्म॥

एकदा कुबेरदत्तः सहधामिण्या सह इत्थँ मँन्त्रयामास। मम भोजनालये प्रतिदिनँ त्रिंशतः चत्वारिंशतो वा अण्डानां विक्रयो जायते अस्माकँ गेहँ परितो एतावती भूमिः वर्तते यत्र न कोऽपि गृहँ कुटीरो वा तिष्ठति। यद्यहँ का अस्कुक्कुटीः पालयेयम् तर्हि धनस्य अपव्ययः न भविष्यति प्रतिदिनँ अंडानाम् विपण्याः क्रयणेन। अस्मिन् भृत्यकोष्ठे ताश्च प्रत्यहँ प्रवेश्य द्वारं पिधास्यामि॥

सुनीतिदेवी स्वानुमतिं ददौ।

परस्मिन्नहनि कुबेरदत्त आपणतो षष्टीः कुक्कुटीः तत्रानीतवान्। सायञ्च ताः कोष्ठे प्रवेश्य द्वारं रुद्ध्वा अर्गलँ तालकञ्च अददात्। ताः कुकुट्यः स्थिताँ मञ्चिकाम् उड्डीय आरूढाः। तस्मिन् कोष्ठे खट्वायाः पश्चादेकः नागनिर्मोकः आसीत्। तस्मिन् मन्दप्रकाश-मिश्रांधकारे ताः निर्मोकँ दृष्ट्वा सर्पं मत्वा सर्वा अपि कुकुट्यः उत्क्रांतप्राणाः अभवन् यतः कुकुट्यः सर्पं दृष्ट्वा त्रासेणैव म्रियंते। सर्वाः ताः वयसां पंक्तयः उद्गतासवः भूमौ पेतुः॥

विभातायां विभावर्यां कुबेरदत्तः सरवापदैः गत्वा तँ तालकँ मुक्त्वा कोष्ठँ समुद्घाटितपिधानँ व्यधत्त।

तत्र च प्रतिताज्ञः परां भीतिमापत् स: कोष्ठस्य मुख-भाग एव द्वारस्यांतिके सर्वाः ताः कुक्कुट्यः विगतासवः पंक्तिक्रमेण स्थिताः तेन दृष्टाः । इमं व्यतिकरं दृष्ट्वा परं विस्मयमारुहत् स। अनेन आलोकसङ्क्षोभेन भयत्रस्तस्य तस्य दृष्टिः शोकबाष्पजड़ाभवन् च्छिद्यमाणचेता न किमपि ज्ञातुम् शशाक । तस्य मनसो वैयग्र्य व्यवर्धत । अत्यंतकरुणामवस्थाम् प्रपन्नः स मुक्तकंठं चक्रन्द विललाप च । संतापपारावारे निमग्नः स दिष्टांतमिव उपेयिवान्। अपूर्वां भीत्युद्रेकस्तस्याभवत् । एवं मर्मव्यथाभिहतः उत्क्रांलितप्राणोऽपि स कथंकथमपि स्थितिमाप । विलापाच्च विरतः। तस्य व्यथा च शिथिलीभूता परं कोष्ठसमीपगमने तस्य भीरुता प्रेक्षणे च कातर्यं आप्यायत। त्रासविलोलं परितो वीक्षमाणः स न किमपि कारणं लब्धवान् येन सर्वाः ताः कुक्कुट्यः सार्गले दत्ततालके कोष्ठे मृत्युङ्गताः ॥

कुबेरदत्तः सद्यःहव्यवाहज्वालाजालप्लुष्टहृदयः अप्रतिकारां कामपि दशां समारोपितः मौनमवलम्ब्य आत्मनः मन्दभाग्यमेव धिक्कुर्वन्नास्त ॥

सुनीतिदेवी सांत्वं २ तं स्वास्थ्यं नेतुम् प्रायतत। आत्मानम् आश्वास्य स कथम् कथमपि स्वास्थ्यम् अव्रजत्। प्रत्यापन्नजीवितोऽपृच्छच्च भार्यां कथमिदम् अभद्रकम् भूतम्। कोऽपि तत्र कोष्ठम् प्रविष्टुम् नाशक्नोत् सर्वे च पतत्रिणः मृत्युम् प्राप्ताः। किमिदम् अनिमित्तौत्पातिकम् ग्रहाणाम् वा चरितम् ।

सुनीतिदेवी चित्रालिखितेव मुहूर्त्तमात्रम् ध्यानमग्ना तस्थौ पुनश्च न्यगादीत् नूनमसौ कोष्ठः भूता-

विघ्नो भविष्यति यदित्थं स ज्ञातवान् ॥

परेद्युः कुबेरदत्तः भोजनालयं गत्वा स्व व्यापारं यथापूर्वमनुष्ठितवान् । एवमेव च प्रतिदिनं तद् दिनादारभ्य ॥

तस्मिन् कोष्ठे एकं आखुबिलमासीद्यस्मिन् मूषक एव प्रविष्टुम् शक्नुयाद् न तु एतादृशो बृहत्फणी यस्यायं निर्मोकः आसीत् । कश्चिदाखु सर्पवर्जितां त्वचमाकृष्य बिलद्वारं यावदानीयात्यजत् । निर्मोकस्य शिरोभागः बिलाभ्यन्तरेऽतिष्ठत् ॥

अपरस्मिन् अह्न कुबेरदत्तः भोजनालयात् प्रत्यागत्य सुनीतिमब्रवीत् 'अयि सुनीते ! रात्रेः पश्चिमे यामे अहमित्थमेव चिन्ताग्रस्तो मञ्चः स्थितः कथं मम भोजनालयस्य कोशराशेरुपचयो भविष्यति । तत्र स्थिता भुजीष्या दुग्धं फाण्टं सितशर्करा मिश्रं पाकम् मिष्टान्नं अपूपान् मोदकान् मुक्तहस्तेन अन्योन्यस्मै ददति खादन्ति पिबन्ति च । पयःराशश्च विक्रीणते । भोजनालयस्य कोशराशेरुपचयो क्रमेण उत्तरोत्तरं वर्धते बृहती हानिश्च जायते । यद्यहं अखिलखाद्य-पदार्थसामग्रीमानीय तुभ्यं समर्पयेयम् एवं भुजिष्यं च तवत्साहाय्यप्रदानाय नियोजयेयम् इत्येवं त्वं पयः आवर्तय किलाटं सम्पादय मिष्टखाद्यञ्च निष्पादय । त्वत्पर्यवेक्षणे सति व्यर्थं खाद्यसामग्र्याः हानिः न भविष्यति सर्वञ्च शोभनं भविष्यतीति ॥

सुनीतिः तस्य वचने हुङ्कारगर्भं वाक्यं संश्रुत्य तस्याभ्यर्थनामनुमेने ।

परस्मिन् दिने स एकं चारणदासनामानं शिशुं तस्याः साचिव्याय आनीय तत्र गृहे कार्यं निष्पादनाय

नियुक्तवान् ।

तत्रावासं कल्पये ।तत्रैव त्वया वस्तव्यमित्युक्त्वा तं कोष्ठं तस्मै निर्दिष्टवान् । चरणदासः क्षीणे दिवस अस्तमुपगते सवितरि आह्निकं कार्यं परिसमाप्य प्रदोषसंभ्रमान्धकारे सावधानैः पादप्रक्षेपैः गंतुम् प्रवृत्तः । मार्गे केनचित् संलपितुम् प्रवृत्तः । चिरायितश्च ततः प्रचलितः । निशामुखे नश्यदालोके मार्गे स शनैः २ इतस्ततः चक्षुरपातयद्भूतवरनमसि स द्विनवारं आविष्ट... पदोऽपि अजायत । कोष्ठ-द्वारं प्राप्यसंतमसेऽर्गलमपनीय निःशब्दपदैः कोष्ठां-तरं प्रविष्टः। पिंडितांधकारभीमे कोष्ठे स इतस्ततः चक्षुः व्यापारयामास न किमपि द्रष्टुम् शशाक कुत्रः शयनं परिकल्पनीयमिति । स एकां आग्नेयचूर्णदीप-शलाकां प्रज्वलय्य मंद्रप्रभया विच्छुरितेऽन्धकारे नागनिर्मोकम् दृष्ट्वा तस्मिन् वद्धशूकभ्रममारोप्य चीत्कारं कृत्वा सद्यो निवर्त्तितपदः सोऽकस्मात् पलायां चक्रे ॥

तस्य चीत्कारं श्रुत्वा कुबेरदत्तः पलाय्य तत्रागतः आगत्य च तमनुसृतः परंतु सर्वतः प्रसृते असूचिभेद्य स्फारांधकारे निलीनः विलीनः स भृत्यः कुत्रापि अदर्शनङ्गतः न पुनर्लब्धः। प्रेष्यस्तु 'सर्पयुक्त गृहे वासो मृत्युरेव न संशय- । यत् ग्रामांते वसेत् सर्पः तस्य स्यात् प्राणसंशयः' इति पञ्चतंत्रे लिखितः श्रूयते इति निर्धार्य आत्मानमुज्झितजीवितं पुनरसून् प्राप्तं मत्वा तं नगरमपि विहाय नगरांतरम् प्रास्थात् ॥

धावनेन संक्षुभितसंधिबंधः रात्रिजागरपरः प्रभातवेलायां विवृतद्वारे कोष्ठे नान्यत् किमपि पश्यन्

कुबेरदत्तः स्व गेहिन्याः विचारम् समर्थपदैश्च तमुपावृँहयत् । यावानेवाहँ व्यापारलाभाय यत्नम् विदधामि तावानेव ज्यानिं प्राप्नोमि । नूनमस्मिन् कोष्ठे कश्चिद् भूतो वसति । अयँ कोष्ठः प्रेतावृतः खलु । न त्वमन्यथा ब्रवीषि । न कोऽपि त्वद्वाक्यमन्यथयितुम् प्रभवति । कौणपोऽत्र कुतश्चित्कालात्कृतवसतिरस्ति । भूतः शून्यो भवति । शून्ये रूपँ धारयति । शून्य एव च विलीयते । न कोऽपि तँ ग्रहीतुम् शक्नोति यथा शून्यम् । शून्येन सह सङ्घर्षेण वयमपि शून्याः भविष्यामः यथा शून्येन बृहत्सँख्याया अपि गुणनेन फलम् शून्यमेव लभ्यते । अतः भूतस्यागमने तस्यापसारो ऽस्माकम् प्रथमँ कर्त्तव्यमापद्यते । तन्निमित्तँ अहम् ज्यौतिषिकान् चिकित्सकान् माँत्रिकान् समाहूय प्रार्थयिष्यामि ॥

दिवसगणँ नीत्वा स एकँ भूतापसारणे प्रथित-यशसँ चिरायमार्गितँ जिनदत्तम् प्राप्य चतुरैः वचन-विन्यासैः तमभ्यचोदयद् गृहान्मे भूतँ निःसारयेति सविनयमवादीच्च 'भद्रमुख ! बहूपकृतो भविष्यामि भवता यदि भवान् मद्गृहमायास्यति भूतँ च निःसार यिष्यति । मम योगक्षेमं वोढुमर्हति भवान् । याचितँ भवते फलँ दास्यामीति तँ सँमान्य सँभाष्य च चतुर्विधं अनुनीतवान् । तदा प्रवृत्तेयँ प्रतिज्ञा द्वयोर्मध्ये अनर्थ-निवारणे समुचितफलप्रदाने च ॥

तदा स मांत्रिकः प्रतिज्ञां निर्वाहयितुम् अपरेद्युः तत्रागतः । 'नाहँ प्रतिज्ञां अपलपिष्यामि । इहास्म्यहँ भवतः कार्यसाधनाय' ।

कुबेरदत्तः गेहम् उपपन्नमाँत्रिकाय तस्मै तँ कोष्ठँ

अदर्शयत् 'इहास्ति स कोष्ठः यत्र मम षष्टीः कुक्कुट्यः पञ्चत्वमुपेताः भृत्यश्च चीत्कारं मुक्त्वा अदृश्यतां गतः

मांत्रिकः सत्वरपदः जगाम तं कोष्ठं प्रति। कुबेरदत्तोऽपि तमनुवव्राज ॥

मांत्रिकोऽभ्यधात् भवान् सरलप्रकृतिः मनुष्यः ॥ को जानीते किं घटेत ? स भूतः भवंतं कंठे गृहीत्वा निपीड्य व्यापादयेत्। अहं तु मंत्रविद्यां जानामि॥ अतोऽहमेव तत्र गमिष्यामि। स्थितेर्वैलक्षण्यं स्यात्तत्र भवान् सुदूरं तिष्ठतु। कुनं सा हसेनेति तं न्यवारयत् ॥

कुबेरदत्तः अर्धपथादेव प्रत्यवर्तत । अति निविडम् उपपीडितहृदयश्च तस्य प्रत्यागमनम् प्रतीक्षमाणोऽवातिष्ठत् ।

मांत्रिकः अंतर्गत्वा कपाटं दत्त्वा सर्वतोऽवलोकयामास। न किमपि आसादितवान् वेल्लमेकम् नाग निर्मोकं वर्जयित्वा। अहो गृहीतं मया तथ्यमिति निश्चित्य करं बिले व्यापारयामास विवरमुखञ्च अंगुलिभ्यां विस्तृततरम् विधाय निजांगुल्यां सूच्या सर्पस्येव दंशं कृत्वा खड्गारज्ज्वा संवीतांगुलिः कपाटं उद्घाट्य बहिरागतः ॥

नासीत् कोऽपि भूतः तत्र परंतु एकः वृहत्फटायुक्तः भीषणः भुजङ्गमः प्रभूतं उल्लासं कुर्वन्। मयि प्रविष्टे सति स दर्वीकरः प्रसारितभागः प्रभूतं उद्वहन् उल्लासं कुर्वन् मां दंष्टुम् फणं स्थापनम् कृत्वा मामभ्यधावत् ॥ अहं तु जीविततृष्णया पलायितुमनः भवतः कार्यं निष्पत्त्यै धैर्यमवलम्ब्य आत्मानं जीवितसंशये पातयित्वा तं निजकरेण दृढमगृह्णम्। स सपदि मुक्तविषः ममांगुलिमदशत् । अहं तु तस्य फटां

भित्त्यां आहर्तुम् उद्यतः येन तस्य प्राणान्तो भवेत्। स पन्नगः स्वं निर्मोकं मदीयहस्ते त्यक्त्वा विवरम् प्रविष्टः अनश्यच्च। मया तु तद् बिलं रुद्धम् पाषाणेन येन स अजगरः बहिर्निष्क्रमितुम् न प्रभवेदंतः एव म्रियेत। अधुना अयं विवरः अंतर्लीनकुम्भीनसः तिष्ठति। परंतु नातिचिरात् स व्यालः अंतर्निरुद्धः प्राणांस्त्यक्ष्यति। तेनैव युष्माकं कुक्कुट्यः मारिताः सेवकाश्च दंष्ट्रेण आक्रान्तः। अहम् तु एनां अंगुलिं रज्ज्वा अबध्नाम् येन तस्य विषं सर्वस्मिन् मम देहे रक्तप्रवाहे च न विसर्पेत्। स्निग्धिमयंते मेऽङ्गानि इति विषवेगाभिनयं कृत्वा स मांत्रिकः विततबाहुः कुबेरदत्तम् रज्जुबंधेन प्रच्छन्नां स्वांगुलिम् प्रदर्शयामास आनीय च तत्र कोष्ठे तं शिलापिनद्धविवरम्॥

कुबेरदत्तस्य मुखं भूयिष्ठं अभासात्। अनेन प्रियसंदर्शनेन तं निर्वाप्य परितोषलाभः तस्मै दत्तः इत्थम् तेन मांत्रिकेण। कुबेरदत्तः प्रसन्नमुखरागः समालोकयत। तस्य गुरुप्रहर्षः हृदये न ममौ। मांत्रिकः तस्य महत्साहायकं व्यधात् तस्य व्यथामलघयत् इति स मेने। तस्य क्लेशः प्रशमितः। स कृच्छ्रमुत्तीर्णः। स तस्मै वारम् २ धन्यवादान् वितरन् कृतज्ञतासूचकं हस्तनिर्देशं कुर्वाणः परितोषस्य परां कोटिमारुक्षत्। प्रहृष्टांतरङ्गः सस्मितं अभाषत मांत्रिकं 'अहम् भवत्तोऽनल्पभारेणाभिभूतोऽस्मि। उपपन्नं ननु शिवं अंगेषु मे। सर्वं शोभनमापतितम्'॥

अनुत्तमप्रमोदेन तस्य हृदयं उच्चचाल। अपूर्वः हर्षः तस्य हृदयं उल्लासयामास। मोमुह्यमानचेता स झटिति धनकोशमपावृणोद्यथेष्टञ्च धनं तस्मै

माँत्रिकाय प्रायच्छ इसूष्यांश्च तम् । भवतः अति-प्रयत्नकुं तुम् नाहमलम् इति च जगाद ॥

गत्वा च गृहम् आर्या: अखिलम् वृत्तांतम् अचकथद्भ्यश्चाह अपि शृणीत अस्माकँ राष्ट्रस्य सर्वकारः निरंतरम् उद्घोषयति यदि कश्चिज्जनः आत्मानम् संशये पातयित ॥ कस्यचित्साहाय्यम् आचरिष्यति वयँ तं विशेषं आदरसम्मानम् दास्यामः तस्मै उत्साहप्रदानम् करिष्यामः इति। अनेन जिनदत्तेन स्व प्राणानपि संशये निपात्य तुच्छातितुच्छ धनविनिमयेन अस्माकँ साहाय्यम् व्यधायि वयम् तुष्टिं नीताः । अतोऽहम् शासनम् सूचयिष्यामि यदनेन जिनदत्तेन उरगमुष्टामुखे स्व प्राणान् बलिम् ददतो अस्माकँ महोपकारः कृतः अस्माकम् सङ्कट निवारणञ्च विहितँ अतोऽस्य जिनदत्तस्य उत्साह-वर्धनम् सत्कारश्च भवताम् कर्तव्यतामापतति। एतादृशाः साहसिकाः वीरपुरुषाः देशस्य जात्याः कृते नितरां उपयोगिनः सेत्स्यंति । एतादृशानाँ साहसकर्मिणाम् वीर्यवताम् परेषां कृते स्व प्राणानां समर्पयितृणां उत्साहनम् देशस्य जातेश्च अत्यँतँ कल्याणमावहति। अतः एनँ जिनदत्तम् सत्कुर्वतु भवन्तः ॥

एतदर्थम् एकँ प्रार्थनापत्रम् न्यवध्नात् । इमँ सन्देशँ पत्रे लिखित्वा पत्रलेखञ्च प्राहिणोत् ॥

कतिपयदिवसापगमे अवाग्वहो कालादालेखः हारकः सावरणपत्रमेकमानीय जिनदत्तहस्तेऽर्पयां बभूव । जिनदत्तो लेखमादाय उद्घाट्यापश्यत् । कुबेरदत्तस्य गृहम् प्राप्य लेखँ तस्मै विससर्ज । व्याप्त

कराले संध्यातमसि आलोकविधुरे गृहोद्देशे कुबेरदत्तो दीपकम् उज्ज्वालयत् लेखेऽयमवाच्यत तत्र चेदम् लिखितमासीत् :-

'आगामिनि मासे पञ्चम्यां तिथौ भारतराजधान्यां देहलीनगर्यां एको महोत्सवो भविष्यति भवद्भ्यः सत्कारप्रदानाय । अतोऽस्मिन् महोत्सवे आत्मनः सान्निध्येन अस्मान् अनुग्रहीतुमर्हन्ति भवन्तः' इति ॥

पत्रम् राष्ट्रपतिहस्ताङ्कितमासीत् । लिखितमनुवाच्य जिनदत्ताय समापयत् :

जिनदत्तस्तु पत्रे विन्यस्तानि अक्षराणि स्वांगुलिस्वेदेन न दूष्येरन् इति पत्रम् रिक्तपत्रावरणे निवेश्य कोशे न्यधात् ॥

'समृद्धं मे आशीर्वचनम् । अहमेव शासनम् सूचितवानस्मि भवद्भिर्यत्' सगर्वमिमं बभाषे कुबेरदत्तः । अहम् भवन्तं अनुगमिष्यामीति ।

कीदृशः स सत्कारः भविष्यति, कया विधया ते सत्करिष्यन्ति, किं तस्य रूपमिति ज्ञातुं तयोः हृदययोः कुतूहलं समजनि ।

अनेकाहानि क्षणमिव क्षपितानि ताभ्याम् । प्रत्यासन्नः प्रस्थानकालः । सन्निकृष्यमाणे प्रस्थान-दिवसे सर्वं सुष्ठु व्यधीयत । स्वम् २ कटमावेष्ट्य पाथेयमादाय द्वितीयायां तिथौ धूमयानस्थानकं उपेत्य देहलीगामिनम् लोहपथसञ्चारिणं वाष्पयानं आरुह्य तौ जग्मतुः । रात्रौ कटमास्तीर्य निद्राणौ प्रातःसमये कटम् वटित्वा शिरसि उपधाय परस्परं चित्तविनोदाय गोष्ठीसुखमनुबभूवतुः । एवं यज्ञपतिः एवं ज्ञानसुन्दरः इत्येव कथया तयोः यात्रा समयः

यातः ॥

स्थितिं याते धूमयाने देहलीं च प्राप्तौ नियते तिथौ। भोजनादिकं समाप्य पत्रे संकेतितं स्थानं सकालं प्राप्तुम् प्रस्थितौ तौ। नियतवेलायां निर्दिष्टं स्थानम् आप्तवन्तौ। तत्र च महान् जननिवहोऽदृश्यत। एकं दुकूलवितानं तयोः नयनगोचरताङ्गतः। तत्र च समवेतानां नरनारीणां आश्चर्यकृत् सम्मर्दः उद्वेगश्च आलोक्यत। पुरुषाणां सहस्रैः सङ्कटितासीत्सा सभा। मेलक इव तद् दृश्यमभूत्। तत्र च प्रमुख-भागे एका वेदिरासीत् यत्रैका कुथा आस्तीर्णासीत्। वेद्यां च आसन्दीनाम् पंक्तयो विरेजुः। प्रथम पंक्ति-मध्ये एकः विष्टरः आसीत्। विष्टरस्य पुरतः एकम् फलकं निहितमासीत्। वेद्या अधश्चापि महत्संख्याका आसंद्यः निहिताः आसन् यत्र जना उपविष्टा आसन्। उत्सवसंकुलमभूत्तन्मण्डपम्। निरवधिको महोत्सवः तत्र प्रावर्तत। विद्युद्व्यजनानि जनान् वीजयन्ति स्म। विद्युद्दीपानां चक्षुःप्रतिघ्नन् प्रकाशः कामपि नूतनां अभिख्यामधत्त ॥

शनैः २ आसंद्यः जनैरपूर्यन्त। वेदिगताः आसंद्यः केन्द्रशासनस्य मन्त्रिभिः उच्चाधिकृतैः समपूर्यन्त। कुबेरदत्तजिनदत्तावपि अधः प्रमुखभागे आसंद्योः व्यवस्थितासनौ अजायताम्। प्रवृत्तनृत्तगीतः प्रमोदमेदुरो महोत्सवो विताने तत्रातनत। क्रमेण राष्ट्रपतेः आगमनसमयः उपातिष्ठत। तस्य दर्शना-भिलाषिणः पौराः मण्डपं समन्तात् परिवव्रुः। प्रथमं उपराष्ट्रपतिः वेद्याः पश्चिमभागे स्थिताम् यवनिकां चिक्षेप आगतश्च आत्मने विन्यस्तमासनम्

भेजे। यदा सभापतेः आगमनकालः उद्घुष्यत तदा प्राकृताः विशिष्टाः सर्वे एव मनुष्याः निस्पन्दमतिष्ठन्। राष्ट्रपतिः आसन्ने मध्ये स्थितं विष्टरमभजत्॥

उपराष्ट्रपतिः आसनादुत्थाय इत्थमभाषत 'एतद् देशस्य व्यवस्थापिकायां सभायां पञ्चवर्षेभ्यः प्राक् कः उपन्यासः प्रस्तुतः यश्च सर्वेषां स्थिरमतीनां सभासदामनुमत्या स्वीकृतः। प्रस्तावस्य इयमभिसंधिः। प्रतिवर्षम् अत्र राजधान्यामेका सभा संयोजिता भविष्यति। ये ये मनुष्याः अस्मिन् देशे गतवर्षे परहिताय स्व प्राणान् बलिमुपहरन्तः विक्रमम् प्रादर्शयन् किमपि उत्तमकर्मानुष्ठानम् वाकुर्वन् वयं तान् यथार्हं पारितोषिकप्रदानेन वस्त्रदानेन प्रतिष्ठालम्भनेन च उत्साहयिष्यामः तान् सभाजयिष्यामः तेषां विक्रमञ्च प्रथयिष्यामः। अतीते वर्षे कतिपयानि नामानि प्रेषितानि अभूवन्। राष्ट्रपतिसमक्षे तेषाम परीक्षणं भूतं। तेषु त्रयः मनुष्याः स्व प्राणान् संशये निपात्य परोपकारं कृतवन्तः। एतदाश्रयिणी कथा राष्ट्रपतिमहोदयस्य सम्मुखे प्रस्तुता। स च तेषु उपारूढबहुमानः संवृत्तः तांश्च देशस्य गौरवप्रदातार इति अमन्यत। ते च पुरस्कारमर्हन्तीति युक्तरूपम् वचनमवोचत् ते च राष्ट्रपतेः प्रसादभूमिभूताः अद्य ते महानुभावाः स्व सान्निध्येन अस्माननुगृह्णीयुः। अधुना तेषां नामानि उदीरयिष्यामः॥

रङ्गनाथः

रङ्गनाथः स्वासनं विहाय समुपस्थितः।

"अयञ्जनः जले उत्प्लुत्य कश्चिद् जले निमज्जन्तं पुरुषं केशेषु गृहीत्वा तमानीतवान्। तस्मै श्रीरङ्गलाञ्छन इत

उपाधिं वितरामः। एतदर्थं प्रमाणपत्रञ्च दद्मः॥

सजनीकांतः

सजनीकांतः स्वासनं त्यक्त्वा तत्रागतः।

'अयञ्जनः समरे गुलिकावर्षे क्षतं विक्षतं आसन्न-मृत्युम् एकम् नरमानीय औषधालयं प्रापितवान्। एतस्मै रु. ५००) पुरस्कारं दद्मः वीरभूषण उपाधिना च अलंकुर्मः'। (प्रमाणपत्रम् तस्य हस्ते समर्पितम्)

सर्वेषु महत्तरः जिनदत्तः

जिनदत्तः अतिसमृद्धिं मनसो भावयन् स्वासनाद् उत्थितः समवनतशिरस्कः राष्ट्रपतिसम्मुखमुपस्थितः

उपराष्ट्रपतिः – शृण्वंतु भवंतः! अनेन एतस्य वणिजः सुखसंवित्त्यै आत्मनो जीवितं एकस्य फणाटोपभयङ्करस्य करालभुजगस्य दंष्ट्राभ्याम् निपातितः। चेष्टाचतुरः सर्पः सखेलं हस्तेन गृहीतः। विदग्धतरः आशीविषो भीमां फटां प्रसार्य एनं अदृश्यत। आशीविषविषवेगेन एष मृत्युना गृहीतो भविता। कथञ्चित्प्रतिकारेण आत्मनो विषादितं जीवितं अनेन सुरक्षितम्। विषोद्गरणप्रवणः सर्पश्च तद्धस्ताद्विमुच्य बिलं प्रविष्टः। भूबिलमञ्जोरगः अनेन प्रस्तरशिलया अंतर्निरुद्धः प्राणांतं प्रापितः। एतस्मै वयम् रु. २०००) पुरस्कारं वीरकेसरीति पदवीम् च वितरामः। एतादृशेषु प्रतिपादितानि रत्नान्येव अर्घन्ति

एवं उपच्छन्दयति तस्मिन् उपराष्ट्रपतौ राष्ट्रपतिः तेन जिनदत्तेन प्रसारिते पाणौ रु २०००) राजप्रसादजं धनमेकां महारजतमुद्रां प्रमाणपत्रञ्च समर्पयामास उवाच च भवद्दर्शनेन ममाक्षियुगलं साफल्यं नीतम्॥

महान् तालिकानाद उत्थितः।
जिनदत्तः दर्पाध्मातः उद्वेलितानन्दः प्रतिन्यवर्तत। सभा च विसृष्टा ॥

कुबेरदत्तोऽपि अपारप्रहर्षङ्गतो गर्वमासाद्य 'मया एव इदँ सर्वं व्यवस्थापितँ इति जनानसूचयत् ॥

जिनदत्तकुबेरदत्तौ स्व २ गृहँ प्रतिन्यवर्तताम् ।

जिनदत्तः स्वर्गसहोदरपरमानन्दतुन्दिलः भार्यायै इमाम् प्रवृत्तिमुपजहार।

इतः परं न कोऽपि ते पादरजसापि तुल्यः इति मा न्यवेदयत् ॥

.. * ... * ... * ... * ... * ... * ...

# हिन्दुमुसलिमशास्त्रार्थः

मुस्लिम :- यूयँ हिंदव उपानद्भिस्ताड़नीयाः। यूयँ मृतान् काष्ठैः दाहयथ। एतावतां काष्ठानाँ उत्पादनाय कियती भूमिः वृक्षैराच्छाद्यते। यदि इयती भूमिः धान्योत्पत्त्यै प्रयुज्येत तर्हि कियताम् मनुष्याणाम् आकण्ठोदरपूर्तिः भवेत्। अत्र यूयमेव अपराध्यथ। अतो यूयँ उपानद्भिस्ताड़नीयाः।

हिंदुः – नैवमित्थम्। वयँ तु मातृभक्तेरादर्श लोकानां पुरतो प्रस्तुवीमः। नास्ति मातृभक्तिसदृशो गुणोऽस्मिन् संसारे। अग्नेः कृपया एव वयँ जगति जीवनँ धारयामः वर्धामहे च। यदास्माकम् शरीरे अग्नेरभावो जायते शरीरञ्चास्माकँ शीतलञ्जायते तदा वयँ म्रियामहे। अग्निरेव अस्मान् पालयति पोषयति वर्धयते च। अग्निरस्माकँ माता माननीया पूजनीया वन्दनीया च। अत यदाग्निरस्माकँ शरीरं त्यक्त्वा निर्याति तदा वयँ स्व प्राणानपि त्यक्त्वा अग्नेरङ्कम् आरोढुमुत्कटा भवामः। अग्नेरङ्कमारुह्य आत्मनोऽस्तित्वमपि अत्यन्तम् विलोपयामः। अतो वयँ तु प्रशँसार्हाः। यूयँ कुठारादिभिः भुवमुत्खाय प्रेत-निक्षेपभूमिं विरचय्य शवँ तत्र निखाय आगच्छथ। समाधिषु शवान्तर्निक्षेपेण सह लक्षकोटिमानवेभ्यः कृते मुधैव कियती भूमिरवरुद्धा भवति न तत्र क्षेत्रम् उद्यानमारोपयितुम् वा शक्यते विधातुम् येन मनुष्याणां जठरपूर्तिः भवेत्। अतो यूयँ उपानद्भिः ताड़नीयाः॥

मुसलिम :- वयँ जगति मातृभक्तेरुच्चतरमादर्शं

प्रस्तुमः। भूमिरस्माकम् माता। सा अस्माकँ कृते गोधूमवृहिश्यादिधान्यम् उत्पादयति येन वयँ क्षुधापूर्तिं कुर्मः। वयँ स्वप्राणानपि बलिम् कृत्वा तस्या उत्संगे शयित्वा विलीना भवामः। शवागारे निगृह्य शवँ विगलितँ च उत्तेजकद्रव्यमिवाक्षरति भूमेरुत्पादनशक्तिं च समेधयते। अत [illegible] न ताडनीयाः। यूयमेव ताडनीयाः॥

हिन्दु — युष्माकँ माता पृथ्वी अस्माकँ [illegible]। पृथिव्यां तु सर्वे एव उपानद्भिः चलन्ति विचरंति पृथ्वी सर्वेषां पददलिता भवति। अग्नि तु न कोऽपि स्प्रष्टुमपि साहसँ करोति। यूयम् पृथिव्याः पुत्रा वयँ अग्नेः पुत्राः। अत यूयमेव उपानद्भिस्ताडनीया अस्मान् तु महापुरुषानिव न कोऽपि स्प्रष्टुमपि साहसम् विदध्यात्॥

ॐ

# गायत्रीजपः

एकदा प्रस्थानगढ़नाम्नि अधिष्ठाने निवसतश्चित्र-गुप्ताख्यमहाशयस्य मनसि नेता भवितुमर्हामीति समीहया पदँ कृतम्। जीवलोके च महत्त्वमाप्तुम् तस्य तृष्णा समजनि। किमनेन कदर्थितजीवितेन किं एतैः प्राणैरुपक्रोशमलीमसैः किमनेन प्राकृतपुरुष-वत्कालयापनेन यस्य न किमपि माहात्म्यम् विद्यते। किं स नरः यस्य नामलेखाय कठिनी ससंभ्रमम् नापतति। यो लोकानां अग्रे परिगणेयताम् न गतः। यमधिकृत्य च सर्वे औदासीन्यभावँ प्रकटयँति। स एव नरो धन्यो यस्य यशः प्रथते लोके, यस्य स्तवा-कर्णनेन लोकानां चक्षुषी उन्मीलतः विकसतः मुखे च कापि श्रवणीया द्युतिः खेलति। यश्च सम्मानँ अधिगच्छति ख्यातेश्च पराङ्कोटिमारोहति। सुधी-समाजे यस्य यशःसितिमा वर्धते। यस्य यशःश्रवात् लोकाः संफुल्लवदना जायँते। यस्य नमस्यायां लोका नतमस्तका भवँति यश्च लोकानां स्तुत्यः यश्च लोके आद्रियते अंगिनां नेत्रोत्सवँ करोति तेषामतिशयप्रेदयः च जायते। परंतु स एव नरः एवँ लोकानां हृदि प्रतिष्ठितो भवति यस्तेषाँ मङ्गलमातनोति तेषामग्रेभूय तेषां धूर्वहो भवति तेषाँ कृच्छ्रमपनुदति तेषां शिवानु-ध्यानपरो भवति, तेभ्यः करुणापूर्णहृदयः तेषाम् समीहितसिद्धौ अभ्युदनिःश्रेयसयोः व्याप्रियते अनारतँ श्रमँ कुरुते तेषाम् कल्याणपरम्परावाप्तये

च चेष्टते तेभ्यः सौख्यमावहति तेषाँ प्रियमनुपूरयति तेषामशुभस्फन्दाद्यत्नमातिष्ठति तेषामुपेयप्रातपत्त्यर्थं च यत्नं विधत्ते तेषु चरितोत्कर्षम् उपपादयति तेषाम् चारित्र्यपरिवर्धनाय च प्रयस्यति तेषामभिमतं घटयितुमीहमानः तेषाम् सुखसंविधायै रात्रिदिवं चेष्टते तेषां विज्ञान् भजयति शरीरञ्च तेषामुपकाराय विभर्ति। यश्च परेषाम् शर्मणे प्रयत्नम् विदधाति यस्य चरितं लोकानामनुकरणीयंभवति तस्यानुकरणेन लोका भूयसीं वृद्धिमारोहन्ते। एवंविधोऽनितात्मा यथार्थजन्मा जनानाम् भद्रभाजनम् यः शरीरिणाम् हितमनुरुन्धानः तेषाम् सङ्कटकालिकम् जीवनञ्च सुखयितुम् दुःखञ्च लघयितुम् अहर्निशमात्मानम् कार्यधुरि नियोजयति स लोकनायको भवति तस्य गां निशम्य लोका आत्मानं कृतार्थं मन्यन्ते तस्य पुरस्तात् चाञ्जलिम् बध्नंति। तस्य वचनञ्च कर्णे कुर्वंति तस्योपदेशञ्चानुसरंति। न भवति तस्य विमानना कचित् ॥

परंतु कस्मिन्नपि कार्ये आत्मानमासञ्जयितुम् कार्यपरिपाटीनियमनिर्धारणमावश्यकत्वेनापतति । अतः कः नियमोऽस्मिन् विचित्रगतिमति जगति कार्यनिर्वाहाय जीवनयापनाय चानुसरणीयः कश्च गुण उपादेयः साधनमाश्रित्य प्रथममेतद् विविदिषामीति जिज्ञासया स बहुसिरोभिः जनैः विचारविनिमयं कर्तुम् प्रवृत्तः ॥

तेषु एको गिरम् उज्जगार विद्या एव सर्वाणि कार्याणि साधयति। विद्याधिगमः कार्यः। विद्याभिलाषुकेण भवितव्यम्। यश्चाधिगतविद्यः नम् दुःखानि नोपसर्पंति सुखञ्चोपनमति। नविद्याः दुःखपारावारे

अर्हन्ति। अकृतविद्याः निर्विद्यन्ते। अविद्यास्थं जगत् वृथा इतस्ततः शिरस्फोटनङ्करोति न किमपि प्राप्नोति। यः विद्यास्तरति स लोके महीयते। विद्या हि विविध उपस्कुरुती उपयोक्तुः। चेतः समाद्धाति बुद्धिं प्रसादयति लाघवमपनयति गौरवम् उपनयति। विद्वान् सर्वान् मुष्ट्योः कुरुते। अनन्यवृत्त्या विद्या समुपासनीया। मनो विद्याधिगमे संलग्नम् कुर्यात्। अतः विद्या साधकतमं कारणं प्रयोजनसिद्धये। अपिदं उपाख्यानम् :–

एकः हस्तिपकानाम् व्रातः गजनिग्रहाय वनङ्गतः। तत्र च भूमौ गुहाम् विरचय्य तस्याः मुखं तृणाद् आस्तीर्य एकोऽवपातः तैरवकल्पितः। तैः सम्प्रातः परितः सञ्चोदितः एको वनगजस्तस्मिन् गर्ते पतितः। तम् तत्र विहाय महामात्राश्च अभ्यवहाराय नैजीयाँ ग्रामङ्गताः। एकः मृगयुः राजा सपरिच्छदः आखेटाय वनञ्जगाम। हस्तिनश्च तत्र तृणादिनाच्छन्नोऽवपातो दृष्ट्वा इत्थं निरचिनोत्। अयं करटी इह वने इतस्ततः बभ्राम। बम्भ्रम्यमाणः केनचित् सिंहेन कुत्रचित् अनुधावितः। द्विपस्तु अयं महाविद्वानस्ति। अपि न् जानाति स यदत्र तृणाच्छादितभूमेरन्तर्गर्तोऽस्ति। सोऽस्मिन् निखातायाम् भूमौ अकूर्दत गर्तस्य अपरत्रभागोपरि विद्यमानतृणैराच्छादितः। सिंहस्तु एकोत्पातेन अतिलंघ्य तम् गर्तम् न कुत्रापि मतङ्गजं आसाद्य स्वम् कन्दरम् प्रतिनिवृत्तः॥

राजानः सर्वदैव विदुषः पूजयन्ति विद्वांसम् कुसुमैः परिकीर्य तस्मै परमादरम् प्रकटयन्ति स्म। विदुषः शिरसि स्रजम् निवेश्य तस्य सम्मानम्

कुर्वंति स्म। विद्वद्भ्यो नमयंति स्म। कालिदासः भवभूतिः जयदेवः कविराजः सर्वेऽपि कवयः राजाश्रिता अभूवन्। कवयोऽपि स्वहस्तोपहृतकरपूजान् तान् राज्ञः तुष्टुवुः, राजानः तेषु विविधानि उपायनानि उपपादयंति स्म। तेषु धनं परिकिरंति स्म॥

राजा तमंबकपम् अवपातादुद्धृत्य सादरमुद्रया तं संभाव्य राजप्रासादमानीतवान्। तस्याहारोऽपि तस्मै तस्मिन्न स्थाने आनीयते स्म। रूप्यकाणाम् सहस्र [illegible] तस्य अर्घः जातः॥

इयान् विदुषो जगति समादरः यद्राजानोऽपि तस्योपरि प्रसादम् प्रकटयंति।

[illegible] व्यतीतेऽल्पीयसि कालेऽस्मिन् अन्येनैकेन समापत्तिदर्शनेन सह विचारविमर्शम् कृतवान्। स तु शारीरं बलमेव सर्वहितार्थं मत्वा तम् आकलितवान्। दैहिकबलमेव उदयाय कल्पते दुःखपरिहाणाय सुखसंवेदनार्थं च। दृढाङ्गा एव कार्यसाधनाय सामर्थ्यम् दधति। क्षीणशरीरबलस्य तु ईप्सितम् सागरमेव। यश्च उन्नतांसः यस्य देहे नयनाभिरामा कांतिः सन्निविष्टा येश्च सर्वावयवान्वद्यः तेनैव श्रीः निर्दिश्यते सुखञ्च भुज्यते। यस्य शरीरं सौष्ठवं दृढतां पीनत्वम् परिणाहताञ्चावाप्नोति स एव सुखप्रयोजनेषु कृत्येषु साफल्यम् लभते। यस्तु शरीरशक्तिहीनः यस्य शरीरावयवाः वृद्धिं न गताः तस्य तु मतिः क्षीयते गतिर्हीयते मुखकांतिरपचीयते नेत्रप्रांतयोः कपोलयोः च कालिमा पदङ्करोति स्त्रियः तम् रहयंति विविधविध क्लेशाश्च तमाश्रयम् कुर्वंति। अत्रेदमाख्यानम् :—

एकदा सर्वेऽरण्यपशवः समितिमेकां समुद्घाटयामासुः

तत्र चेत्थम् प्रास्तुवन् । 'इमे व्योमैकान्तविचारिणो विहगा अस्मान् पीड़यँति। निशिततरैः नखैरस्माकम् नयने स्फोटयँति । चञ्चुप्रहारैः शिरः उत्क्षरँन्ति इमे ध्याङ्क्षा अस्मन्नेत्रे उत्पाटयँति। एवम् स्फोटित-नयना अंधीभूता न वयँ तेषां किमपि कर्तुम् समर्थाः। खरचञ्चुविकर्तितपृष्ठा न वयम् किमपि तेषामपकारं कर्तुम् प्रभवामः। तेऽस्मांकम् उद्गम उल्लिख्य ग्रस्तामिषा आकाशे उत्पतँन्त अस्माकम् मांसमास्वादयँति वयँ तु सर्वथा निःसहायास्तेषां समक्षे प्रतिकाराक्षमा तिष्ठामः । न कोऽपि तेषु गजकर्णाहतो भवति न लांगूलविक्षेपप्रहतो। अस्मासु एकः स्फुटितक्षणोऽपरः निर्गालितचक्षुगोलकः पाटितोदरः दुःखपरम्परा नु भवति परंतु क्लीववत् किमपि प्रतिकर्तुम् न शक्तः। वयम् किमपि प्रतिपत्तिं न पश्यामः । अस्माकम् शारीरिकशक्तिः तेषाम् उड्डयनशक्तिसमक्षे सर्वथा अकिंचित्करा । तदा तेषु एकोऽब्रवीत् अस्मिन् युगे उड्डयनशक्तिरेव शारीरिकशक्त्याः बलीयसी । वायुयानानि दिगँतरालम् गत्वा नगराणामुपरि बमवर्षम् कुर्वँति । बमविस्फोटेन कियती प्राणहानिः अर्थहानिः च जायते। लक्षाणां मनुजानां संहारो भवति परंतु कोऽपि किमपि कर्तुं न शक्नोति। अद्यतने काले वायु-शक्तिः पदातिशक्तेः बलीयसी' ॥

तदा मतङ्गः बभाषे युष्माकमयम् तर्को न मे सुष्ठु युक्तियुक्तश्च प्रतीयते। वायुयानानि सर्वदा सततम् आकाशे उड्डयितुम् न समर्थाः। ते किंचित् कालादूर्ध्व भूमा एव आगत्य तिष्ठँति। यत्र देशे ते विश्रमम् कुर्वन्ति तत्र अन्यदेशवासिनाँ ये बमैः प्रहताः गतनोस्त।

अन्य ।। ते मनुष्याः तानि आयुधानानि समचूर्णयिष्यन्। अत्रेदम् सूपपन्नम् भाति मे। अस्तमयवेलायाम् इमे सर्वे पक्षिणोऽत्रैव वने वृक्षेषु स्व नीडसंश्रयँ कुर्वान्त। अहम् तैराश्रिताः शाखाः पुष्कराग्रेणाकृष्य भँक्ष्यामि वृक्षान् वा समूलमुत्पाटयिष्यामि।। तदेमे सर्वे पतत्रगः शाखासु निद्रागा भूमौ पतिष्यँति। रात्रौ अंधतमसि नैशव्यापारविरहिता न त उड्डीय किमपि शरणमाश्रयितुम् प्रभविष्यंति । तदा वयम् सर्वे वन्याः नखास्तान् पद्भिः विदलयिष्याम। तं च सन्धि रुपमृदित : प्राणानुज्झिष्यँति॥

एवँ सम्मँत्र्य तथानुष्ठिते सति सर्वे वनपशवस्तान् सर्वान् विहगान् विदलयाञ्चक्रुः . ते च एवं मृदिताः प्राणांस्तत्यजुः॥

जिज्ञासु एतद्विषयानुसंधानपरः एकमन्यम् सुमेधसम् नरम् सङ्गत्य पृच्छाञ्चक्रे भो ! भवान् अत्यन्तम् तीक्ष्णमतिः प्रतीयते। अस्मिन् भवे जातानाम् जनानाम् श्रेय आपादनाय कोऽस्ति साधको गुणः ? किमत्र भवतां मतम् ? किं भवता निश्चीयते ?

स किंचित्कालँ ध्यानसंवीतहृदयः स्थितः पश्चात् लोचने उन्मील्य एनमित्थम् प्रत्यभाषत साहसिक्यमेव एको गुणः सर्वमूधन्यः। भीरवः काद्विशीकताम् प्राप्य सर्वत्र त्रस्यँति पलायँते च। ते समुन्नतिमधिगन्तुम् नेशते। उदारसत्त्वा एव सर्वा बाधा निराकृत्य कामानाँ भोगाय कल्पते । बालकोऽपि सत्त्वेन उपस्कृतो निःसत्त्वम् भीलुकँ युवानम् विद्रावयँति। कातरः छायाया अपि बिभेति ! हीनसत्त्वः कदर्यः वीरपुरुषस्य पराक्रमे विस्मयमानः महदाश्चर्यम्

विभ्राणः कुत्रापि स्थितिं न लभते । भयेन पलायमानस्तनोत्कस्तां प्रयाति । अहीनपराक्रमः शूरः परेषां बलानि मृद्नाति जयम् लब्ध्वा अनपायिनीं श्रियम् भुँक्ते । भुजोच्छ्रितरिपून् सानुबंधाः सम्पदः सततम् सेवँते । वीरं नरं सम्पदः समालिङ्गँति । वीरतया मनुष्यः सर्वान् वशे नयति । वीराः नरपुङ्गवा अवँध्ययत्ना न कुत्रापि पराजयँ लभँते । तेषाम् समारम्भा भव्यमुख्या निरत्ययाश्च साफल्यँ भजँते । त्रस्नूनाम् न कुत्रापि साफल्यञ्जायते । भीरुकस्य अजागलस्तनायितञ्जीवनम् । अतः शौर्यमखिलकार्य-सम्पादकम् । अत्रेदम् कथानकम् इममर्थम् पल्लवयति ॥

एके अरण्ये वासिनः सर्वे वन्याः सत्त्वाः एकीभूय विमर्शमकुर्वन् अयँ मदोन्मत्तः गजः इतस्ततः सर्वत्र परिभ्रमन् पदाघातैः भूमितलँ विदलयन् अस्माकम् बिलानि शिशून् च निष्पिणाति वयञ्च गजपदक्षुण्ण-समावासा भग्नपदशिरोग्रीवा जर्जरितकलेवरा रुधिरप्लुताः हतत्रस्तशिशवश्च जायामहे । केचिदस्मासु जीवशेषा जाता भग्नपादाः स्वोदरपूरणे कुत्रापि गँतुमक्षमा तत्रैव परिक्लिश्यँत प्राणांश्चोज्झँति । शिशवोऽपि एवमेव पञ्चत्वँ प्राप्ता अस्माकँ वँशम् स्मरणीयतामानयँति । अस्माकँ संतानक्षयः जायते । गजोऽयमस्मान् अन्वयम् सूदयति अस्माकँ कुलानि उच्छेदयति । वयम् शीर्णदन्ताः प्रोतनखभङ्गाः स्फुट-मस्तका अंतकालँ प्राप्नुमः । इदं महद्भयम् पतनमसह्यँ अस्माद्मतङ्गान् । अयँ हि बहुविधानि व्यलीकानि करोति । अतः कश्चिदुपाय आश्रयणीयः येनास्य

मत्तहस्तिनो ध्वंसो विधीयेत ॥

ते सर्वे संहत्य एकं सिंहम् प्रत्युद्ययुः। तञ्च एवम् नम्रं न्यवेदयन् । वयमस्यैतं कष्टाश्रताः। एष क्रूरकर्मा गजः प्रतिदिनमस्मान् पङ्क्त्यां विदलयति निषूदयति। एवमस्माकं कुलक्षयः सम्पत्स्यते। भवान् प्रतिदिनम् अस्मासु एकमेव हंति स्वोदरपूर्त्तये । यद्ययं गज एवमेव अस्माकं सर्वनाशं करिष्यति तर्हि न भवतः भोजनाय किमपि प्राप्स्यते। अस्य वधेन युष्मद्योऽपि न हिंसिष्यते । भवानेव एनं विध्वंसयितुम् प्रभुः। भवता एनं शातयित्वा स्व वीर्यं प्रख्यापनीयम् ॥

कण्ठीरवस्तु तेषामभ्यर्थनामङ्गीचकार। युष्माभिः धैर्यावष्टम्भः कार्यः। धैर्यध्वंसो न विधेयः। यः धैर्येण न हीयते स न याति पराभवम्। अहम् युष्माकं साह्यं आचरिष्यामि। एवम् तानाश्वासयामास ॥

यदा तं मृगेन्द्रः गजमाक्रमितुम् संनह्यति सृक्कणी परिलेलिहन् गजस्य पदपद्धतिमन्वेषयणायति तदा गजो नदीतटं गत्वा रोधांसि निघ्नन् स्व शुण्डाम् पङ्कमिश्रितेन जलेन प्रपूर्य प्रतिनिवर्तते। यदा शार्दूलः उज्झम्पं कृत्वा तमाक्रामत् तदा गजः स्व शुण्डायाः सर्वं तत् परं पङ्किलं पयःपूरं सिंहस्य मुखे नयनयोश्च व्यसृजत्। हरिस्तु अंधीभूय विद्रुत्य अदर्शनमगात् ॥

तदा ते सर्वे वनसत्त्वा भग्नाशाः संवृत्ताः प्रतिपत्तिमूढ़श्च स्थिताः। तदा तेषु एको विचारविचक्षणो न्यगादीत् पिपीलिकापि गजस्य नासिकाप्रवेशेन तस्य प्राणविमोचनं कर्तुम् क्षमा। यथा पर्वतो महतोऽद्रिराजस्य पतनेन संचूर्णयते तथैव स्वस्मिन् बिले निहितया आग्नेयचूर्णनालिकया प्रज्वालितया ॥

ततस्ते भयाविष्टः सर्वे समेत्य पिपीलिकामभियुः । पिपीलिका अचकथत् नाहम् किमपि कर्तुम् पारये । जानात्येव भवान् यद् दंती शुण्डया फूत्कारं कृत्वा अग्रे २ पदं निधत्ते । एवम् तस्य फूत्कारेण निराकृता अहं तस्य नासिकायां प्रवेशं न लप्स्ये । तदा ते सर्वे तूष्णीं तस्थुः ॥

तदा ते एकस्वरेण अभाषंत यथा वयमस्मात् सङ्कटाद्विमुच्येमहि तथा संविधातुमर्हसि ।

पिपीलिका क्षणं ध्यानावस्थितचेतसा स्थिता । तदा निजगार :— अस्ति औपयिकांतरं । तद् हीतत् । द्विरदः प्रतिदिनं उदकपानार्थं नदीतटमायाति । नदीकूले एका प्रस्तरशिला विद्यते । अन्यत्र जलपानाय आगमनेन तस्य गुरुभारेण तस्य चरणौ नदीतीरवर्ति पङ्के निमज्जतः न च स तौ अनायासेन उद्धर्तुम् शक्नोति । अतः स सर्वदा तत्र शिलायाम् पदं निधाय उदपानङ्करोति जलं प्रपीय स्वस्थताञ्च व्रजति । कश्चिन्मामेकस्य शुष्कपर्णस्योपरि स्थिताम् तत्र निक्षिपेत् । यदा स शुण्डया जलं पास्यति तदा तत्र स्थितं सर्वजलं आवर्त्ताकारेण शुण्डाम् परितो आयास्यति । तदाहम् पत्रे स्थिता शुण्डाया वहिर्भागं आरुक्षामि । यदा स शुण्डया जलं मुखे प्रक्षिप्य नद्या आगमिष्यति तदाहम् तस्य नासिकायां प्रवेशं लब्ध्वा तस्य प्राणवियोगङ्करिष्यामि ॥

एवमामंत्र्य यदा दंतावलः प्रवणेन प्रदेशेन जलार्थं पुलिनमवतीर्णः पिपीलिकया तथा विहिते सति मातंगो मारितः ॥

इदानीं विमृशंतु भवंतः । अत्र साहसिकयमेक

अपेक्षितममासीत्। यदा मतँगजः पानार्थं ङ्गतः तदा पत्रस्थिता पिपीलिका तत्रैयाना। गजाः शुष्कं तृणम् अदंन। यदा वारणस्य मनसि एवमभविष्यत् यदहम् प्रथमं तृणमशित्वा जिह्वायाः सौख्यं सम्पादयामि पश्चाज्जलपानङ्करिष्यामि यथा लोका जलपानार्थं विश्रांतसदनङ्कत्वा प्रथमं किंचित् खांडँ वस्तु प्राश्य पश्चात् फाँटं पिबंति तदा पिपीलिका तस्य मुखे गत्वा चर्वितो अभविष्यत्। पिपीलिका स्व प्राणव्ययम् न अजीगणत्। सा तु आत्मोपहारं कृत्वा आत्मानँ दारुणसँशये निपात्य इदँ सर्वं अनुष्ठितवती। तस्याः साहसमेव वनरुक्षोन्मापद्विमोक्षणे फलोदये च कारणीभूतम्॥

य इच्छेदहम् वसीगरच्च वसिष्ठो वा स्याम् प्रथितयशा वा लोकस्याभिपूजितो भवेयम् स साहसमाचरेत्। मा आत्मानम् भिये दाः॥

चित्रगुप्तो गम्भीरगवेषणातत्परोऽप्रशांतकुतूहलो नगरपरिगणेयेषु जनेषु एके मेधाव्रताभिधेये प्रख्यातनाम्नि विपुलकीर्त्तौ नरे इममेव प्रश्नमकार्षीत्। किं भवानत्र अभ्युपैन ? कथम् लोकस्य श्रयः प्रथताम् ? कश्च नियमः समाजस्य कृते परमोपयोगी वदः मेःस्यति अस्माकम् न्यूनतामपहरिष्यति ? कश्च देशस्योपचयाय भविष्यति ?

मेधाव्रतोऽब्रवीत् मया तु इत्थम् निगम्यते इदानीं सर्वत्र भूमण्डले प्रजातँत्र राज्यम् वर्तते प्रत्येकस्मिन् देशे। बहुसम्मत्यनुसारेण हि प्रजाप्रभुताकम् राज्यम् चाल्यते। अद्यत्वे अयमेव ऐकांतिकः सिद्धान्तो यस्मिन् पक्षे बहुमतं स एव सत्यः। प्रत्येकम् जनेषु

छद्मप्रदानाधिकारः मृतपिण्डबुद्धिर्वा कुशाग्रबुद्धिर्वा कर्शिताङ्गः हृष्टपुष्टशरीरो वा अल्पकायो वृहत्कायो वा विद्वानन्तरो वा कातरस्तरस्वी वा: वर्त्तमानव्यवस्थां प्रसह्य समुत्पाटयितुम् तु न कोऽपिसमर्थः। वर्त्तमान-युगे सर्वः प्रस्तावः बहुमतमनुरुध्य अपास्तः स्वीकृतो वा भवति। अस्मिन् युगे गड्डारिकाप्रवाहपतितो नरः एकाकिनो गुणशालिनो नराद्वरः। यश्च नरः एकलो समुदायासहचरितः स किमपि कर्तुम् न क्षमः। अल्प-मते स्थितिः सर्वथा निरर्थिका। सङ्घातेन परित्यक्तस्य व्यर्थ एव अखिलः प्रयासः। अल्पमतेस्थितानाम् उच्छिद्यंते क्रियाः सर्वाः। मतविसंवादे सति सांप्रतम् अधिकमतस्य पक्षस्यैव साफल्यञ्जायते। नास्ति कोऽपि सांशयिकोऽस्मिन् विषये। बहुमतमेव साधकतमम् कारणम्। वहुमते स्थितस्य भवतः क्षेमँ शाश्वतम् अप्रतिहतञ्च। अत्रेयमाख्यायिका मदीयमर्थम् विशदयति :—

एकः हस्तिपकानाम् निवहो गजग्रहणाय वनङ्गतः। तत्र तैरेकोऽवपातो रचितः। सर्वासु दिक्षु अरण्यम् परिवेष्ट्य तैस्तदरण्यवासिनस्सर्वे कुञ्जराः अवपातम् प्रति प्रचोदिताः। सर्वे करिणः तस्मिन्नवपाते पतिताः। एको नागस्तेभ्यः सर्वेभ्यः पृथग्भूय एकँ निभृतदेशँ प्रति पलायितो यत्र करेणूनां मरणस्थानमासीत्। अयमिभानाम् स्वभावो यद्वे प्रत्यासीदन्ति मरणकाले एकँ निश्चितम् स्थानँ प्रति गच्छँति तत्रैव च प्राणान् जहति। अयम् कुम्भी तत्र प्राप्त एव श्रांतो भूत्वा तत्र पतितः। हस्तिपकाः तं तस्मिन् स्थाने यत्रासंख्यातानां हस्तीनाङ्कङ्काला अस्थीनि द्विता उत्क्रांतवायवः

दस्यवः आसन् इति। अनेकधोऽयमासन्नमृत्युः नानेन गृहीतेनास्माकं किमपि प्रयोजनं स्यादिति तं तत्रैव विहाय शेषान् करीन् सुनिर्दलितान् विधाय बद्धीश्चाहं गृहीत्वा आत्मना सहैव नीत्वा गताः॥

स रङ्की विश्रामं कृत्वा स्वस्थो भूत्वा सुखेन वनं प्रति प्रस्थितः॥

अतोऽहम् ब्रवीमि सङ्घे शक्तिः कलौ युगे। अपि भवन्तो सूना एव सूनसमाना एव किं न स्युः यदि भवन्तो बहुसंख्याका विद्यन्ते तर्हि भवतां जयः॥

चित्रगुप्तोऽनुसंधानकेन्द्रो एतद्वृत्तो मनस्येवम् समचिन्तयत् विद्या, शारीरिक शक्तिः, वीरता, बहुसंख्यत्वमित्येतेषु को गुणः श्रेष्ठतर इति को नु विमृशेत्। यथाग्निरङ्गारमङ्गारं सर्वमेव जठरपिठरङ्गतया शरीरपुष्ट्यै कल्पते एवमेव एते सर्वे गुणा मनुष्यस्य श्रेयोपादनाय प्रभविष्णवः परंतु बहुमनत्वस्य सम्पादनाय एतेषां त्रयाणाम् प्रख्यापनं प्रचारः प्रसारः कर्तव्यतामियर्ति। प्रचारस्य कृते व्याख्यानदानमनुत्तमं साधनम्। यथा प्रवचनपटुता समेधिष्यते तथा मया यतितव्यम्। प्रवचनकलाकोविदत्वं प्रोपणीयं लोकानां प्रबोधनार्थम्। अतः स कश्चिद्वाग्मिनमुपेत्य व्याख्यानकलाम् अभ्यस्यत्। सततास्यासनिरतः स व्याख्यानपाटवम् अधिगम्य स्वयं तु लब्धप्रबोधो यथा लोकेषु प्रबोध उन्मिषितः स्यात्तथा यत्नम् विधातुम् समर्थोऽस्य अस्थापयच्चैकं सङ्घम्। सर्वोत्थानसर्वकल्याणसङ्घ इति तस्य नाम चकार विद्या.स्वास्थ्यशक्तिवीर्यवत्तासामर्थ्यविषये लोकान् प्रत्याययितुम् स कार्यपरिपाटीम्

स्फोटयितुञ्च ॥

स साचिव्याय चित्रगुप्त एकमनुचरं रामदासा भिधं नियोजयामास। चित्रगुप्तः सानुचरः प्रस्थान-गढ़ात्प्रस्थाय मायापुरीमापत्। तत्र च वृत्तपत्रे सूचना दत्तां यदहम् सायँ सप्तवादने प्रतापभवने विद्या-विषयमधिकृत्य व्याख्यानँ दास्यामि। पुरीवासिनः स्व साम्निध्येन मामनुगृह्णंतु ॥

षड्वादनसमयँ सूचयितुम् घण्टाघोषो यावदेव अभवत् लोकाः प्रतापभवनमापतितुम् प्रारब्धाः। भवने निहितासु आसन्दीषु उपविष्टाः। भवनस्य अंतिम भागे एका वेदी विरचितासीत् यत्र द्वौ विष्टरौ आस्ताम् चित्रगुप्तस्य रामदासस्य च उपवेशनाय। पुरत एकञ्च फलकम्। भवनभित्तौ अवलम्बमाना चैका यँत्रघटिकासीत्। इतस्ततः सर्वत्र भवनं विद्युद्-दीपकद्योतितमासीत् चक्राकाराणि च विद्युद्-व्यजनानि पटलेऽवलम्बमानानि समुपस्थितानाँ जनानाँ शरीराणि अशिशिरयन्! तत्र विशाले भवने आसन्नचतुःसहस्रा जनाः समवेता आसन्। नियत-काले सप्तवादनशँसिन्याञ्च घटिकायाश्चित्रगुप्तः सानु-चरः तत्र प्रापज्जनता तालिकानादैश्चाभिनन्दितो वेदिकामारुह्य विष्टरं भेजे। तत्र च सभ्यान् सम्बोध्य एकां भाववतीमोजस्विनीञ्च वाचमगादीद्यस्या अर्थं सङ्क्षेपः –

भो सज्जनाः! विद्यैव मनुष्यस्य एकमाभरणँ यच्च न ह्रीयते नापह्रीयते न केनापि चोरयितुम् शक्यते। विद्ययैव लोकाः स्व २ आरम्भेषु साफल्यँ भजंते। विद्यैव सर्वोद्योगानाम् सफलतामावहति। विद्यया

हीना नराः शृङ्गपुच्छरहिताः पशव एव। सर्वे लोकः सुखा विद्याहीनं नरं रहयंति। विद्या कार्यक्षमतामावहति। विद्याहीनस्य नरस्य समारम्भा दुर्विपाकं यांति। विद्याविरहितनरं विषमावस्थानि समुपतिष्ठंति विद्याहीना नरा दुर्दशां लभंते। यः कश्चित् स्वानुष्ठानेषु सिद्धिं हस्तयितुमभिलषति तेन विद्या अतन्द्रतया समुपार्जनीया। यश्च स्व व्यापारेषु अमोघयत्नो भवितुङ्काङ्क्षति तेन विद्या समुपासितव्या। यश्च स्वान् व्यवहारान् सफलयितुमिच्छति तेन विद्या अवश्यम् अधिगंतव्या। सफलाङ्कार्यपरिणतिं इच्छोः जनस्य विद्यां परित्यज्य न किमपि गत्यंतरम्। अविद्या मनुजस्य सम्यक्समारब्धान् महतायांसेन विहितान् प्रयत्नान् विफलयति। विद्याहीनस्य कर्त्तव्याकर्तव्ये व्यामुह्यति चेतः कार्याकार्यविचारधिषणा च विनश्यति। विद्यया नरः भद्राणि पश्यति मनोरथांश्च निर्विशति। विद्या श्रियः प्रदुग्धे विपदं रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि। विद्या समृद्धिं पुष्णाति। निःशेषेन निजप्रयोजनवत्तां साधयितुम् इच्छुकस्य जनस्य विद्यया विना न कश्चिदवलम्बः। सिद्धिं हस्तीकृत्य दुर्लभम् मानुषजन्म सफलीकर्तुम् विद्या निरुपमं साधनम्। विद्या सुखसोपानपरम्परा दुःखानि निरसितुम् क्षमा। विद्याविरहिता नरा विगतचक्षुष इव। अनधिगतविद्या जना अवसन्नदृश इव। विद्यया नरः जगति सम्मानं लभते आदरणीयताञ्च याति। अत्रेयम् कथा इमं विषयं विशकलयति —

एको गजः हस्तिपकैर्विरचिते तृणाच्छादितेऽवपाते पतितः। हस्तिपकाश्च तं तत्रैव त्यक्त्वा उदरभरणाय

आमङ्गताः। एको राजा मृगयार्थमागतस्तं हस्तिनम् तत्र स्थितम् दृष्ट्वा अनुमनो यदयं हस्ती कस्यचित् रिपोः। अनु स्मर्यमाण इयं भूमिः तृणाच्छन्ना गतश्चमां आत्मानं निह्नोतुम् सम्यगुपयुक्ता इति मत्वा अस्मिन् गर्ते क्रीडन आत्मानञ्च रक्षितुमपारयत्। केसरी तु तं न कुत्रापि द्रष्टुम् पारयिष्या स्व स्थानङ्गतः। अतोऽयं हस्ती विद्वान् स्व विद्यया जीवितं सुरक्षितं व्यधात्। तं महतादरेण समानीय स्व सौधे निवास-स्थानमददात्॥

स एव विद्वान् यो जगतो बाह्यरूपेण न मुह्यति। विद्वान् परोक्षम् प्रत्यक्षवद् द्रष्टुम् पारयति। अंतर्निहितं दृष्टेरगोचरं सर्वज्ञानाति। विद्वान् जानाति यत् कूपस्य वारे निर्मले जले रत्नानि मणिमाणिक्यानि च सन्ति। यच्च सम्यग्वेत्ति यदस्याः सृष्टिकायः यस्याः किमपि मूल्यं नास्ति गर्भे स्वर्णं निरास्त अस्याम् मृदि कलधौतमंतर्निहितं विद्यते। विद्वान् सकलजगत् हस्तामलकवत्प्रत्यक्ष पश्यति। अतोऽनलसमनगा विद्या आराधनीया॥

(बधिरीकृत् करतलनादः समुत्थितः। घटीयंत्रं सार्धाष्टवादनसमयोऽङ्कित आसीत् (

वयं भवता अत्यर्थमुपकृताः। वयं भवता अनुगृहीताः। भवन्निर्दिष्टेन श्रेयोवर्त्मना जीवनयात्रां यापयंतो वयमवश्यम् सुखं निर्वक्ष्यामः। दयोपनत हृदयेन भवता अस्माकं महानुपकारोऽनुष्ठितः। भवता निर्दिष्टेन पथा सञ्चरमाणा वयं दुःखदहापनङ्कतुम् सुखञ्च भोक्तुमवश्यमभविष्याम इति भवतस्य प्रति दिशं वचांसि अश्रूयन्त। भवान् किंचिजलपानम्

कृत्वा गँतुमर्हति ॥

एको हल्लसंज्ञाँ ददौ । अपर एको निपुणमतिर-
ब्रवीदहन्तावद्गास्यामीति ।

स तु विश्रान्तिभवनङ्गत्वा एकस्याम् स्थाल्यामेकं
शर्करावत्पात्रमेकं क्षीरपात्रमेकञ्च काफ़ीति नीय-
विशेषक्वथितपात्रं द्वौ मोदकौ द्वौ च चषकौ निधाय
ताम्बूलवीटिकापणङ्गत्वा द्वौ सिगरेटौ च गृहीत्वा
तेभ्यः तम्बाकूचूर्णमपनीय अं. राष्ट्रियचूर्णकोष्ठके
(विस्फोटक*) प्रवेश्य मुखञ्च तयोः तत्पत्रचूर्णेन
पिधाय स्थालिकां निधाय तूर्णमेव तत्रागतः स्थालीं च
तयोः पुरतः स्थिते भोजनफलके स्थापयामास। तौ च
उद्गारान् प्रारब्धवन्तौ । पात्रमावर्ज्य संतप्तकाफ़ी-
क्वाथञ्च एकैकस्मिन् चषके आसिच्य शर्करावत्
विधाय तस्मिन् पयः संसिच्य चषकं प्रपूर्य सिताक्षीर-
संमिश्रम् तत्पयः एकैकचषकपरिमितमपिबताम्।
ततः मोदकौ चाश्नीताम्। तदनंतरं दंतस्य निष्कोषण-
केन दंतांतःप्रविष्टोच्छिष्टकणादि निष्कास्य तोय-
निर्णिक्तपाणी धूम्रपानचिंतनं कृतवन्तौ। रामदासः
स्व कोषाद् अग्निशलाकापेटिकामुद्धृत्य एकामग्नि-
शलाकाम् प्रज्वलय्य यावत् सिगरेटम् प्रज्वलयितुम्
प्रवृत्तः तावदुपरि भ्रमता चक्राकारेण विद्युद्व्यजनेन
सा शलाका निर्वापिता । भवनस्य एकस्मिन् कोणे
भगवतो चन्द्रमौलीश्वरस्य चित्रमूर्तिः भित्तिलग्ना
स्थितासीत्। तस्याः पुरत एकः मल्लक आसीत् यस्मिन्
तैलञ्च प्रज्वलिता वर्तिश्चास्ताम्। विद्युद्व्यजनस्य
अधस्तात् सिगरेटप्रज्वालनमसंभवमिति मत्वा

*पटाखा इति हिंदीभाषायाम्

रामदासः कोऽप्यस्थापितलपाग्नदीपिकायाः सविधेऽभ्युपगमत् सिगरेटमुज्ज्वालयितुम्। सिगरेटं उद्दीप्य तत आगत्य सिगरेटेनाऽन्येन सनाथीकृतवान् पाणिम् चित्रगुप्तस्य। तञ्च स सिगरेटमुज्ज्वलयितुम् इङ्गितम् चकार तमाखुधूमञ्च मुखादुदगिरत्। चित्रगुप्तस्तस्य सम्मुखे स्थित्वा स्व सिगरेटमुखेन रामदासस्य सिगरेटमुखं संस्पृश्य एकेन निश्वासेन तमाखुपत्रमाघ्राय धूमपटलं मुखादुदगिरत् धूम्रपानसुखञ्च निरविशत्। पुनरेकेकेन निश्वासेन यावद् द्वौ आघ्मातुम् प्रवृत्तौ तावदग्निस्फुलिङ्गः सिगरेटान्तर्गतशलाकेऽलिहन् स्फोटौ चाजायेताम्। द्वयोश्च मुखौ विकृतिं नीतौ। तदा सर्वं समुपस्थिता जना अट्टहासमकुर्वन्॥

'भवान् उद्गिरति यः सर्वमपहुतं पदार्थम् सम्यग्जानाति जलधेरन्तर्गतं मणिमाणिक्यम् भूमेरन्तःस्थितं चामीकरञ्च जानाति स एव विद्वान्। भवान् तु न जानाति स्म यदस्मिन् सिगरेटे अग्नियशलाका अंतर्निहितास्ति यथा भवता दृष्टांतितो गजोऽजानात् तृणाच्छादितभूमेरंतः किमस्ति। अतः भवान् विद्वानेव नास्ति। भवांस्तु केवलं वाचालः। वयं वाचालस्य अनुगामिनो भवितुम् नाभिलषामः। वयं वावदूकस्य अनुयायिनो भवितुम् न वाञ्छामः। अतो गम्यताम् भवान्। अस्माकं स्फुटवादिता भवते न रोचेत परंतु नात्रास्माकं किमपि दोषः॥

एवम् तत्र तिरस्क्रियां लब्ध्वा चित्रगुप्तो गुर्वीम् लज्जामुवाह तस्मात्स्थानात्प्रस्थितः नगरांतरं पैठानपुरं प्राप। तत्र च डिण्डिमघोषैः पटहनादैः पुरे प्रत्त्र तं प्रकटयन् कश्चिद्महाभागः चित्रगुप्ताभिधः शारीरिक-

अचिरान्तरेण भाषणङ्करिष्यति राजेन्द्रनन्दनो सायं सप्त-
वादनसमये इति कस्मिश्चित् कुटीरे कलितनिवासो
कश्चिद् होतः सर्वैव स्वतः ॥

प्रदोषस्य धूम्रच्छायासु घनीभूतासु स चित्रगुप्तः
तस्माद् गृहाद् निरक्रामत् राजेन्द्रसदनं प्रति यातुम्।
षड्वादनसमये घण्टानादेन प्रचलितैः जनैरपि
राजेन्द्रसदनमनुसृत्य मार्गः विहितः। नियतसमये च
तत्र प्राप्तः। विद्युद्दीपिकाप्रकाशेन दीपितमासीत्
राजेन्द्रसदनम्। तत्र कश्चित् सिगरेटम् समुद्दीप्य
मुखेनोद्गीर्णधूमनिकरः सुखं बुभुजे। अन्यश्च
नवकोष्ठव्ययम् किञ्चित्फलमभुङ्क्त स्म। अपरश्च चनिष्ठु-
यितं किञ्चिदन्यम् फलमभुङ्क्त। अपरः न्यग्रोधफलम्
अभिनत्। पश्चिमतमीनसिरे समेधमाने शाखान्तरलं-
बिनः पतत्रिणः किलकिलायन्ते स्म॥

दिनात्यये सप्तवादनसमये चित्रगुप्तोऽनुचरसमेतः
पादचारी संप्राप तत्र। सदने अनिवेशितविग्रहाः
पञ्चसहस्रम् जना आसन्। तत्रायातं तज्जनाः कर-
तलध्वनिभिः स्वयं स्वागतं व्याजह्रुः। मुहूर्तं विललास
प्रकामम् शान्तिः। वेदीमारुह्य क्षणम् कृतश्रमः स एकां
प्रभावशालिनीम् गिरमगादीद् यस्यायम् सारः –

अहमेकम् समोत्थान सर्वकल्याणसङ्घम् स्थापित-
वानस्मि यस्य प्रयोजनेषु अन्यतमम् सर्वत्र देशे
स्थाने २ व्यायामशालानाम् प्रतिष्ठापनम्। शारीरिक-
बलम् हि अस्माभिः सर्वप्रथममपेक्ष्यते। विच्छाय-
वदनो जनोऽल्पसामर्थ्यो न किमपि कार्यं निर्वोढुक्षमः
म्लानाननो नरो यस्य धमनीषु रक्तप्रसारः पत्र नास्ति
सदा मृत्युम् प्रतीक्षमाणः किमपि चिकीर्षितं न

नेप्रातुमर्हति। यस्य वदनम् पाण्डुताम्गच्छच्छरीरञ्च तत्त्वभूत् कार्ये कृतप्रयासोऽपि नैष्फल्यम् प्राप्नोति। कृशिताङ्गयष्टिः मनुष्यः किं कर्तुमीशः स्यात्। शारीरिकशक्तेश्च विकासनं सर्वप्रथममस्माकमवधानमर्हति। शरीरस्य दुर्बलीकरणेन न वयं संकल्पितान् मनोरथान् प्राप्स्यामः। नास्माभिः किमपि व्यसनम् सेवितव्यं यच्छरीरं निर्बलतां नयति। व्यायामदृढविपुलोच्छ्रितांसः रिपूनुद्धूत्य विघ्नबाधाम् परिहृत्य स्व प्रयोजनं साधयति। व्यायामः शीलितव्यः। व्यायामपरिचर्यार्थम् व्यायामशालाम् प्रतिदिनं गन्तव्यं। ये व्यायच्छन्ते ते न सेदन्ते न रुग्णन्ते। विप्रकृष्टदेशञ्च पर्यटनाय गन्तव्यम्। आयुष्यः सायम्प्रातिको विहारः व्यायामेन सङ्गठितशरीरः स्व विरोधिनो मर्मसु प्रहरति वैरनिर्यातनञ्चच्छति स्व मनः संतापम् विनोदयितुम् पारयति स्वमुद्देश्यञ्च साधयति। तस्य निरस्तप्रायाः रिपवः। तत्सम्मुखं न कोऽपि आयातुम् साहसङ्करोति। रिपूद्धरणं तस्य सव्यहस्तखेलितम्। नित्यनूतना स्फूर्तिः तस्य देहे जागर्ति। अतो नरः सामर्थ्यमुपचिनुयात्। यश्च व्यायामं न करोति तस्य पाचनशक्तिः मन्दताम् याति। तस्य शरीरं दृढत्वम् न गच्छति। विकलः कायः न चिरं प्राणिति। सुदृढावयवशाली नरः सिद्धिं पुरः स्फुरन्तीमीक्षते। शारीरिकबलोच्चयाय व्यसनानि परित्यक्तव्यानि। मादकद्रव्याणाम् कात्स्न्येन बहिष्कारः करणीयः। कदापि न प्रमदितव्यम्। न किमपि व्यसनमस्माकमाकर्षणाय अपाहरणाय वा अलं भवेत्। तादृशेन व्यवहारेण न भवद्भिः पङ्क्तिः भाव्यम्। दूषितवायुमण्डले न

विहरणीयम् । सुसङ्गठितशरीरः अभिनयसत्त्वः पीनाङ्गो मनीषिभिः दोग्धा । न खारम्भेषु सदा फलता भजते । शारीरिकबलसम्पादनार्थं व्यायामम् व्यायामभुवं युष्माभिः प्रत्यहं गन्तव्यम् । स्थले २ व्यायामशालास्थापनम् अस्माकम् सर्वास्थानसर्व-कल्याणसङ्घस्य कार्यक्रमस्य प्रथमङ्कर्तव्यम् । तद् निष्पादनाय च धनमपेक्ष्यते । अतो भवन्तो धन-वितरणेनास्माकं साहाय्यमापादयन्तु ॥

नाहम् विस्तरेण कालहरणं चिकीर्षामि श्रीमताम् अतो विरमामि विस्तरात् । इत्थम् वाचमुपसंहरन् स स्वासनं प्रपेदे –

तस्य वचनावसाने समवेता जनता तस्य कण्ठे स्रजमास्थापयामास । युष्माकं श्रोतुमुत्सुकं वचनम् शृण्वतो नः हार्दः संतोषो जातः । भवद्वचोभिः प्रयुक्ताः वयम् श्रेयः प्राप्स्यामः इत्युक्त्वा च उदक-पानाय तम् प्रार्थयन्त । केनचित्संज्ञा दत्ता कमपि विपरिणमं संसाधयितुम् । तदेङ्गितं तर्कयित्वा एकः तीक्ष्णबुद्धिः आत्मानमेतदर्थम् उपाहरदगच्छच्च विश्रान्तिगृहम् किंचिदभ्यवहार्यमानेतुम् । गच्छतश्च तस्य चेतसि इत्थं समुत्पन्नम् वञ्चकतामाकलय्य काचिद् लीला सञ्चालनीयेति । स द्वौ चषकौ उष्ण दुग्धेन आपूर्य मोदकिकाद् द्वे मोदके आनीय एकस्याम् स्थाल्यां निधाय अपरश्च द्वे मृत्तिकानारङ्ग-फले क्रीडनकमात्रे न कुतश्चिद् द्रुमादवचिते तत्र परिवेषणपात्र्याम् निधाय तयोः पुरोदधे । तौ चोष्णं दुग्धं पीत्वा मोदकौ च उदरसमर्पितौ कृत्वा यदा नारङ्गफलस्य त्वचमपनेतुम् प्रायतेताम् तदा तद्

अक्षमौ ते फले स्थाल्यामेव निधाय प्रस्थातुम् प्रवृत्तौ। प्रायोऽत्युष्णदुग्धस्पर्शेनावयोः अंगुल्या अवसन्ना जाता इति निरचिनुताम्। कँडूयनकेन कर्णं कँडूयमानौ गतौ। न काणवराटकोऽपि दानरूपेण ताभ्यां प्राप्तस्तस्मात्स्थानात्॥

किं तौ अस्मद्विषये निर्धारयिष्यत इति विचारो क्लेपयति माम्। युष्माभिस्तु एका कपर्दिकापि न दत्ता ताभ्याम्। कथँ तयोरंतरात्मा अचिन्ष्यत इत्येकः तेषु ऊचे॥

युष्माभिस्तु लज्जाम् तनूकृत्य स्वाभिमानयुक्तैः भाव्यम् इत्यपरः तेषु ववल्गे जगर्ज च। स तु दैहिकबलसम्पादनविषये किमर्थमस्माकँ कालहानिं कृतवान् यत्तस्मिन् किमपि शारीरिकबलँ नास्ति। स तु अस्माभिरुपपादितस्य फलस्य त्वचमपि अपहर्तुम् न शक्तोऽभूत्। स तु कुहकवद्विचेष्टते। अस्य अहीनबाहुपराक्रमसमग्रभुजपराक्रमकथा तु अस्माकम् दृष्टेरावरणाय एव। स तु केवलँ लम्बोदरः तुन्दिल एव। न तस्मिन् किमपि बलम् विद्यते। यादृशी शीतला देवी तादृशँ वाहनङ्खरः। यादृशो नेता तादृशः एव तस्यानुयायिनः। यथा मुहम्मदः कामी क्रूरश्चासीत्तादृशा एव तस्यानुयायिनः। यथा शङ्कराचार्यः विद्यारतः तर्कपटुश्चासीत्तादृशा एव तस्य मतावलँबिनः। यादृशोऽसौ हीनबलोऽस्ति तादृश एव तस्यानुचरः क्षीणशक्तिः। न तयोः कोऽपि त्वचमपनेतुमशक्तत्। तँ अनुसृत्य वयमपि तादृशा एव भविष्यामः। अतो न वयम् तस्मै किमपि दत्तवँतः। वयँ तस्याडम्बरे न पतिताः। अतः सोऽस्मान् कृतधिय एव मँस्यते

इत्यपर उवाद् ॥

चित्रगुप्तः कुटीरं निवृत्तः। किंचित्समन्यु स्थितः इत्थम् ऊहितवान् ममोपदेशः तेषाम् हृदये प्रक्षिप्तः श्रवणावधि एव सँतिष्ठते। न कोऽपि माम् प्रत्येति। नाहम् सफलकामो भूतोऽद्यावधि। प्रायः मम विषयविवेचनप्रकारोऽभिनवः। न कस्यापि रुचये बभूव। मम विषयंनिर्वाचनँ सामयिकम् प्रासङ्गिकञ्च नासीत्। ममोपदेशश्रवनेषु न कोऽपि कमपि गुणम् निभालयते ॥

स ह्रीविजितः सन् रुषितोऽभवत्। स तान् भ्रष्टाचारान् पुरुषान् आत्मनि निनिन्द। अद्यप्रभृति न कोऽपि तस्य सङ्घस्य सदस्योऽजायत। स स्वार्थोपपत्तिं प्रति दुर्बलाशः समपद्यत। तस्य चेतोऽस्वास्थ्यँ अभवत्। न कोऽपि तेन प्रत्यायितः। एतद्विषये यद् अनेन भाषितँ सर्वम् तत्खिलीभूतँ। बहुविमृशतस्तस्य बुद्धिरभवत् विद्या च शारीरं बलञ्च इत्येतौ द्वौ विषयौ न समीचीनौ स्तः। अत इतोऽन्यतो गत्वा वीरताविषये व्याख्यानद्गास्यामि इत्येव सांप्रतम्। चुरणस्वाभिमानोऽपि अहार्यं निश्चयमकरोत् यदितरतो गत्वाहम् ममोपदेशँ साकल्येन श्रोतॄणाँ चेतसि दृढँ निवेशयितुम् यत्नँ विधास्यामि अमोघक्रियश्च भविष्यामि ॥

स्वात्मनात्प्रतिष्ठासुः स जेठापुरं नगरं गँतुम् मनो दधे। तत्र च गत्वा एकस्मिन्नाक्रीडे निवासश्चक्रे। पप्रथे च पुरे प्रवृत्तिः यदेतादृशो महापुरुषः उच्चविचारशीलोऽत्रागतोऽस्ति ॥

अदोषस्य एधमानतिमिरे प्रदोषसमये जनाः

कोदण्डरामस्वामीसुरालयप्राङ्गणे सँदिपतितुम्
आरंभिरे । अगल्भवयसोऽप्रगल्भवयसः प्रचुरधन-
सम्पन्ना अर्थकार्श्यङ्गता निर्बलाः सबलाः सर्वे थाः
जनाः नगरव्याकुलां तदागमनकथामाकर्ण्य तत्र
समज्यायां संमिलिताः आसन् सँध्याकालिकेन मन्द-
मन्दानिलेन वीज्यमानाः ॥

चित्रगुप्तस्यागमनसमये जनालापकलापो विरतः ।
अतिगुर्वर्थङ्कमपि सन्देशमादधानोऽस्मान् तँ श्रावयितुं
सर्वान् प्राकृतान् विचारान्निष्कास्य तत्स्थाने शुभो-
दर्कघटकान् विचारानस्माकँ हृदयेषु प्रवेशयितुमेव
चित्रगुप्तपादानाममूल्यप्राणेन शरीरेणालँकृतमिदम्
स्थानम् । अभिनवफलितानाम् रम्यफलगुच्छानाम्
सञ्चयँ जनस्य वँहिष्ठः अंश उपाह व्याख्यानानँतरं
तस्य पुरत उपहाररूपेण राशीकर्तुम् अभ्यागतञ्च
सभाजयितुम् । तस्य भाषणारम्भकालात्प्राक्सर्वे ते
तूष्णीमवतस्थिरे । तस्य वचांसि च कर्णे कर्तुम् लग्नुः
ततश्चित्रगुप्तः शौर्यपराक्रमोत्साहोत्पादकमेकम्
व्याख्यानङ्गाम्भीर्यवत्या सारवत्या वल्लभया च
वाण्या दत्तवान् यस्मादिदमस्फुटत् –

संसारमापन्नस्य जीवस्य कृते को गुणः कल्याणा-
वहः हितसाधकः कश्च तेषु प्रधिमानमाप्नुयात् । अहँ
ब्रवीमि तत् तु शौर्यम् । यदि कश्चिद्भवतः यशः
क्षिणोति बलात्कारङ्करोति अवलोपनमवज्ञानमा-
तनोति सुखँ छिनत्ति भवतः निशाँतँ प्रविश्य धनँ
लुण्ठति अभिसंधानङ्करोति भवतः कीर्तिमपहरति
अहितमाचरति कटुभाषणङ्करोति तर्हि एतस्य सर्वस्य
समर्थमुत्तरम् मुष्टिपातेन तस्य संचूर्णनमेव प्रति

पद्यतां भवति। न हि प्राणभृत्सु कोऽपि अवधूतभयं कठिनचित्तमयोहृदयं निर्वर्तितत्रासं साहसिकम् श्लाघवञ्जनम् प्रतीपयति तत्र च लाभं पश्यति। साहसिकस्य जनस्य स्वांतम् समुन्नतत्वम् सुशीलत्व-श्चावगाहते! भयमस्माकञ्चित्तं नाविशेत्। भयम् हि मनोम्बुजप्रमाथजलकम्। निर्भयता सर्वैरेव समुपास्या यदि वयम् वितथं प्रत्यादेष्टुमिच्छामः भयोपशांतये दृढसंकल्पो विधेयो निर्भीकता च सम्पादनीया। विक्रमाश्चिन्तारं सम्पद् उपतिष्ठंति। निर्भीको जनो द्विषन् शमयिता आपदाम् निवारयिता। कातरस्य मातृपितुरुषस्य प्राणवतः मेदिनी व्यर्थमेव भारं बिभ्राणा बभूव बरीभर्ति च। साहसशालिनः प्राणिनः प्रियदर्शनम् मुखं नेत्रैः निर्वेशनीयम्। सर्वे तस्मिन् संक्रमितेक्षणवृत्तयः तमभीष्टदर्शनमालोकनतत्पराः च जायंते। तत्र प्रेषितदृष्टयः न तृप्तिं लभंते। तस्य ऊर्जितं नाम श्रोत्रेषु सम्मूर्छति। प्राणभृतो विकीर्ण-मुखाः तस्य कीर्तिश्रवणकुतूहलिनः आत्मानम् विस्मरंति। स एव सुखमश्नुते यस्तु भीविवर्जितः प्रख्यातपराक्रमः। विपत्संपातमनुभूय भिया विमुक्तो देही तन्निवारणाय दुर्घटां प्रतिज्ञां पौरुषावष्टम्भं कृत्वा पूरयति फलवत्ताञ्चासादयति। वीरा एव नरा जगति स्वाभिरामं मेनुः। वीरपुरुषस्य परोऽपि स्वजनायते वीराः सकलां वसुमतीम् वश्यां कुर्वंति। तेषाम् सिंह-नादेन कातराः स्थातुमपि न शक्नुवंति। परैरपश्यो-सितवीर्या एव नरश्रेष्ठाः अन्यमपि स्वपथगामिनम् अभ्युदयाशंसमकार्षुः। उदग्रवीर्या सत्त्वा नर-पुङ्गवा जनस्य भूमानम् स्वपथगामिनं कर्तुम् प्रभवंति।

निरीतचः तस्मात्पृथगवतिष्ठते । स यमुपक्रममाऽऽतनिष्यति तस्मिंस्तस्मै सफलता उपनेस्यत । मयाऽऽस्थापितः सर्वोत्थानसर्वकल्याणसङ्घः सर्वान् तान् उपायाननुतिष्ठति येन लोकेषु वीररससञ्चारो भवेत् । यदि न कुर्यात्तदा स्व नामत्यागं कुर्यात् ॥

तुमुलः करतलनादः सञ्जातः । उदकपानञ्च तस्मै आनयन् । पण्यवीथिकातो दुग्धफलाद्युपहारमानीय तस्मै व्यतरन् । नीतमुपहारं भक्षयित्वा निष्कालनदेन दन्तोच्छिष्टम् निष्कास्य स गन्तुमुपचक्रमे । गमनार्थं उद्यच्छमाना जना देवस्थानाद् बहिस्तमब्रुवन् भवता महती कृपा विहिता अस्मानसन्मार्गात्परावर्त्य सत्पथे आनयत् । युष्मादृशानां परिपूतधियां समागमो वारं २ न लभ्यते । तच्च सनिर्बन्धं प्रार्थयंत कुत्र भवतः सङ्घस्य कार्यालयः । वयं तत्रागमिष्यामः भवतः सङ्घस्य सदस्या भविष्यामः । भवांस्तान् द्राक्प्रबुद्धानकरोत् ॥

समवेतेषु जनेषु एकोऽपर्दत (अपानवायुम् व्यसृजत्) । तद् दुर्गन्धमपहर्तुम् चित्रगुप्तो विवर्तितवदनो द्वित्राणि पदान्यपासरत् । स नरः चित्रगुप्तस्य मार्गमावृत्य तस्य कार्यालयमागन्तुम् सहायताञ्च दातुम् प्रतिज्ञाञ्चकार तमाश्वासयञ्च । चित्रगुप्तः प्रयातः । पश्चात् स नरोऽब्रवीत् अयञ्चित्रगुप्तमहाशयोऽसम्बद्धं कथयति अनर्गलं अतिप्रसक्तञ्च बहु भाषते । वचनरचनां कृत्रिमां सृष्टिं कल्पयति । यदाहं तस्य भाषितं चरित्रञ्च विभावयामि तदाहम् तस्य अनुगमने न बहुगुणम् पश्यामि । गोहेनर्दिनोऽस्य पौरुषं तु अस्माकमिदानीं विदितमेव जातम् । अपि

चेदयँ वीरताविषये ऽनर्गलँ प्रज्ञाँ कुर्यात् परंतु नास्ति तस्मिन् वीरतालेशोऽपि। यदाहँ तत्सभ्याशँ गत्वा अपदं तदा स तत् कस्यचिद्रोषगर्जितँ मत्वा पलाययितुमारेभे। मया तु तस्य गतिः व्यघानि। स च निभृतमाश्वासितः। इतरथा तत्क्षण एव सोऽदर्शन- ङ्गतोऽभविष्यत्। अपावृतस्तस्य वीरस्वरः। इत्थँ श्रुत्वा सर्वे ते जना व्यस्मयन्। न कोऽपि चित्रगुतस्य कार्यालयङ्गाम॥

चित्रगुप्तो बहुतिथङ्कालँ प्रतीक्षमाणस्तस्थौ। न कोऽपि प्रपन्नः। न स सफलकामो भूतः। न कोऽपि तस्य मनः आह्लादयत्। दूरेऽपास्तँ तु बहुमतदम्। तत्तु विद्याशारीरिकबलवीरताविषये व्याख्यानदानेन एव आपादनीयमासीत्। न किमपि साफल्यङ्गतम्। न शुभ्रं यशः लब्धम् न च अभूत् ख्यातिः। आत्मानँ गृहसुखेभ्यो विमोच्य निजकर्मणो विपाक व्यर्थमेव इतस्ततः पर्यटम् क्वचिन्नग्नचरणः क्वचिच्च ऽ[illegible]को- पानत्कः। अँ न कस्यापि सुखँ रचितु तन्निर्देशयितुम् वा सफलीजातः। अहमल्पधीवदाचरम्। अहम् मूढधियामग्रेसरः, न कोऽपि मत्सदृशो जड्धीः भुवि वर्तते। मदपेक्षया नास्ति कोऽपि अन्यः क्षुद्र- बुद्धिः। एतादृशँ परिभवमनाकलय्य एव अहम् गृहान्निरगाम् हतादृश्चाभवम्। नाहम् संसार- समस्यां समाधातमशक्नवम्। ममाविवेकस्यैव परि- स्फुरन्ति दुष्फलानि इदँ सर्वं क्लेशजातम् व्यर्थमेव इतस्ततः परिभ्रमणम् शिरःपीडनञ्च। जनानामेकी- करणे सहमतत्वँ प्रापणे च नाहम् सफलीभूतः। नियतेरादेशादिदम् भवितव्यमासीत्। न स नदृङ्न

अहमं प्राकरोल्लज्जाम् भृशञ्च ललज्ज। न कोऽपि देशे मत्सन्निभो मन्दप्राज्ञः। मादृशा अल्पमेधसोऽप्राज्ञाश्च यदि न स्युस्तदायम् देशो ज्यायान् भवेत्। मम सुखितजीवनसौख्यमपहृतमेतैः कुचेष्टितैः। आत्मसम्मानम् गोपायितुम् आत्मानञ्च व्यर्थायासप्रयासात् द्रक्षितुम् इदमावश्यकम् यदहम् स्व शेमुषीं निशिततराम् विदध्याम्। अपथे पदमर्पयन्नहम् दुःखानाम् आश्रयो जातः। अतो बुद्धिवर्धनं समीचीनम्। बुद्धिः तीक्ष्णतरा विधातव्या। इत्थम् मनसि आम्रेडयामास कस्तत्र उपायोऽनुष्ठीयताम्? एवम् चिन्ता समुत्पन्ना तस्य। बहून् विचारान् मनसि आलोडयन् विलोडयन् आस्त। एवञ्चिन्तयतस्तस्य मनसीत्थमभूत् यद् गायत्रीजपानुष्ठानेन मम बुद्धिर्निशिता भविष्यति :-

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥

अर्थ :- वयम् त्रयाणाम् लोकानाम् उत्पादयितुः तस्य परमात्मनो ध्यानम् कुर्मः। सोऽस्माकम् बुद्धीः सत्पथे प्रवर्तयतु॥

इत्थम् विचिन्त्य तस्य मुखम् सुतरां वभासे गायत्रीरटनञ्च प्रारेभे॥

... * ... * ... * ... * ... * ... *

# गीतातात्पर्यम्

हिंदुषु शङ्कर रामानुज माध्व इति त्रयः प्रमुखाः सम्प्रदायाः। तत्र च शङ्कराः ज्ञानेन मुक्तिम् मन्यंते। रामानुजास्तु भक्त्या मोक्षो लभ्यत इति कथयंति। मुक्तिस्तु कर्मणा प्राप्यत इति माध्वाः। सर्वे ते स्वानुबंधं गीतायामेव लभंते। गीता ज्ञानयोगम् उपदिशतीति शाङ्कराः। गीता भक्तियोगं शिक्षयतीति रामानुजाः गीतायां कर्मयोगो निर्दिष्ट इति च माध्वाः। सर्वे ते प्रमाणप्रवीणाः आत्मनः प्रखरपांडित्येन मतिविभवेन च गीतायाः केनचित्प्रकरणस्थेन केनचित्प्रकरणच्युतेन वाक्येनैव स्वं स्वं पक्षम् पुष्णंति। गीतावचांसि उदाहृत्य स्वम् स्वं मतं विन्यस्यन्ति। अन्यमतस्थानां वचनानि अप्रमाणीकृत्य निजमतमेव युक्तियुक्तम् उपपादयंति। आत्मनः विकत्थंते परपक्षीयांश्च विकत्थंते॥

एकदा अस्मिन् विवादयुक्तविषये तेषु मिथः वादः प्रचलितो दृष्टांतिनश्च तैः सूर्योदयः—

यदाहमर्द्धरात्रौ निद्राणः प्रभाते जागृतोऽभवम् चेतनतायाश्च मयि अवभासोऽभवत् ज्ञानशक्तिश्च प्रबुद्धाभवत् तदैव मया परं ज्योतिः साक्षात्कृतं इति शाङ्करः।

युष्माकमयम् भावः उपपत्तिभिः न सिद्ध्यति। नास्ति भवत्सु पर्याप्तो बुद्धिप्रकाशः। यदाहम् रात्रौ निमीलितलोचनः शय्यायामतिष्ठम् न तदा मे ज्योतिः साक्षात्कारो भूतः परंतु यदाहङ्कर्मयोगिवत् कर्माणि

प्रसितोऽभवम् लोचने च उद्मीलयम् तदैवाहम् परं ज्योतिः प्रत्यक्षीकृत्य कृतार्थोऽभवमिति माध्वः।

इदमपि असमञ्जसम् । संनिपातग्रस्तमानव-प्रलपितमिव । मया तु तज्ज्योतिः भक्तियोगेनैव साक्षात्कृतो। अहं काश्चिद् होराः भक्त्या निमीलित-लोचनः शय्यायामतिष्ठम्। यदाहँ नयने उद्मीलयम् ज्योतिषा दर्शनम् दत्तमिति रामानुजः॥

... * ... * ... * ... * ... * ... *

ॐ

# भोगनाथचरित्रम्

अल्पपरिच्छेदे त्रिकोष्ठात्मके वसतिस्थाने निपुणं रचिते शय्यागारे एकां खट्वामधिशयानः पार्श्वतः पार्श्वम् परिलुठन्नास्ते रामनाथो निःशोणितवदनः। क्षयरोगाक्रांतो बहुतिथङ्कालम् रुज्यते स्म। एकदा कपाटवक्षा परिणद्धकंधरः संफुल्ललोचनो रामनाथः तुन्नवायः निजनिषद्यां दृढीकृत्य सूचीशिल्पं कुर्वन् जीवनयात्रां साधयन् अमन्दानन्देन कालमनयत्। तदनंतरं रोगशय्यायां शयानः प्रतिदिनमङ्गमुच्यते स्म इदानीं शीर्णगात्रः विवर्णः आसन्नमृत्युश्च सञ्जातः। प्रतिदिनं रोगात् शुष्यन् इदानीं परिम्लानाकृतिः भूतपूर्वायाः रुचिराकृतेराभासमात्रो भूतः। अप्रतिसमाधेयव्याधिः स जीविताशां तत्याज। विकलाङ्गयष्टेः वैवर्ण्यमापन्नस्य तस्य स्वरो मन्दीभूतः। शरीरसादाद्धशिथिलितवचनविन्यासः स कथं कथमपि स्वाभिप्रायं प्रकटयति स्म। अद्य द्वित्राणि दिनानि मन्दायतेऽस्य स्वरः। स भोगनाथमुपेतुम् सङ्केतितवान्। वाक्यजातं तस्य जिह्वाग्रे तस्थौ परंतु स समुदीरयितुम् न पारयामास। वक्तुकामस्यापि तस्य तस्य वचः कण्ठे एव व्यलीयत। क्षणानंतरं करुणोज्झितेन वपुषा पतन् स निमिमील॥

शोकज्वालावलीढाननो भोगनाथः सोरस्ताडम् व्यलपत्। पितुरंत्यां क्रियां निर्वर्त्य भोगनाथो गृहम् प्रतिन्यवर्तत। न तस्य पित्रा किमपि भागलेख्यं प्रणीतमासीत्। पितर्युपरते सर्वोऽपि पितुः परिग्रहस्तस्य

हस्ते रक्षितः। पित्रा सञ्चितस्य धनस्य पुष्कलः अंशः तस्य रोगप्रशमनाय व्ययीभूतः। पितरि प्रमीतेऽल्पमात्रया किंचिदवशिष्टः। जङ्गमं स्थावरञ्चाखिलं वैद्यमृत्यं तेन दीर्घरोगः। तदानीं स पञ्चविंशतिवर्षकल्पः आसीत्। वर्धमानश्च वयसा स त्रीणि वर्षाणि अत्यवाहयत्। तस्मिन् समये तस्य पितृदत्तप्रभूतधनस्य केशवदत्तो द्वौ कोष्ठौ संक्षीणविशीर्णौ भूतलशायिनौ च जातौ। एक एव कोष्ठोऽवशिष्टः। तस्यापि दशा इत्थम्। श्च्योतति छदिः। जीर्णं द्वारं निष्प्रभम्। निम्नपटलः जिह्मः कोष्ठः। छिद्रिताः तृणाङ्कुरानुविद्धाः भित्तयः। कोष्ठस्य आयामः दशहस्ताः परिमाणं षड्हस्ता उच्छ्रायस्तु सप्तहस्ताः। अत्र न कोऽपि गवाक्ष आसीत् विद्युतप्रकाशः। तत्र दिवाऽप्यन्धकारः रात्रिस्मरत्यान्यहानि। तृणाङ्कुराः कर्दमश्च भूतलम्। न किमपि दृष्टिशरणम्। इतस्ततश्च बहिर्गतरवश्चासीत्॥

पितुरूर्ध्वं पितुर्धनेन सनाथीकृतस्य भोगनाथस्य जीवनश्च चिरकालं यावत् सुखेन पर्यवसितम्। व्यवसायगवेषणपरो चिंताचक्रारूढः इतस्ततः परिबभ्राम वाणिज्यव्यवसाये नासीत्तस्य कोऽपि अनुभवः। वाणिज्यनियोगान्वेषणं तस्य न फलमावहत्। व्यापारं न सोऽलभत। नाप्यधिकं धनं तस्य हस्ते आसीद्येन कनीयसा मूल्येन वस्तूनि क्रीत्वा ज्यायसा विक्रीणीत पण्यव्यवहारं कुर्वीत पण्येन वा जीवेत्। न किमपि शिल्पं वा जानाति स्म येन आत्मनो जीविकां निर्वोढुमर्हेत्। प्रभूतकालं जीविकायै प्रयतमानः ततस्ततो ग्रामं २ नयति स्म। वृत्तिः कथं कल्पनीयेति न वयं जानाति स्म सः। अनावृत्तिस्तस्य सर्वप्रापञ्चिकसुख

प्रतिबंधिकाभूत्। नाजानादिक्रमपि वर्त्तनं सः धना-भावात् कुसीदिकवृत्तिमपि न कर्तुम् शशाक। अर्थ-कार्श्यं गतः सोऽल्पमूल्येन विपणौ स महार्घाणि वस्तूनि। तस्यैका भार्यासीत् सुन्दरा देवी। तयोः वयसोः चतुष्पञ्चा वत्सरा अंतरमभूवन्। स पञ्च-विंशतिवर्षः सा तु विंशतिवर्षावस्थाऽभूत्। न कोऽपि शिशुकः। कथं प्राणयात्रा निर्वाह्येति आसीत्तस्य समस्या। कथं क्षुत्प्रणाशं क्रियेत ? या शिक्षा देशे प्रचरति स्म ताम् वित्त्वा सुशिक्षिता अपि बहवो जनाः कालकर्मीणा भवंति। स्नातका अपि कृच्छ्रेण वृत्तिं वर्तयंति। स तु सुशिक्षितोऽपि नासीत्। तस्य तु का कथा। तं कोऽपि वृत्त्युपायो नानुशिष्टः। पितरि जीवति सति समृद्धोऽपि इदानीं व्यृद्धो जातः। न कापि वृत्तिः समाश्रिता तेन। न किमपि कर्तुमपारयत् स जीविकाहेतोः। पितुर्देहावसानेन स अत्यन्तमौर्ख्यं अवाप। सोऽत्यन्तविपमेऽर्थदारिद्र्ये पतितः। अस्मिन् विगाढे समये स किंकर्तव्यताविमूढः समजनि। एकदापि अभिरुचितं जिघत्सितं भोज्यं नोपाकल्पयत् स नितांतं मनोहतोऽभूत्। हस्तांकयारहितजीविनम-त्यवाहयत्। अनुवेलं ग्लपितमभूत्तस्य क्षामक्षामं शरीरम्। अपूपादिस्वादुपाकक्रियाणिष्पत्तये न पर्याप्तं धनं तस्य सविधे। नीवरवेष्टितविग्रहः क्षुद्रैर्दन्ता-सि ...ायमानं बिभ्रत्पौनःपुनीयदशाभिभूतो नैराश्य-पिशाचिकया कवलितचित्तः स स्वजीवनं शून्यशून्यं अपश्यत्। मानसव्यथाकवलीकृतः स आत्मानम-नायमद्राक्षीत्। अशितानशितेन जीवति स्म कदाचिद् अद्रात्यासङ्कदाचित् न्यहात्यासं भुक्त्वा। अनास्वादि-

नाहारस्य तस्य निद्रामपि अलभमानस्य एवमेव निशाः अयासीद्दुर्निद्रनेत्रस्य। तस्य गेहिन्यपि चीवरवेष्टितांगी अपर्याप्ताशनतया पांडुवदना प्रारब्धक्लच्ततोऽन्निकैः परिभूता अतिमोहाकुला अवास्थित। गृहिण्या अशेष-भूषणलब्धयोऽपि शनैः २ उदरभरणार्थं विक्रीयते स्म. तेन रत्नहेमाभरणस्वरजातङ्कौसीदकेषु निक्षिप्य स जठराग्निमुपशमितवान्। किंभवत्तयादत्यर्थं दारिद्र्यो-पेतोऽर्थोपार्जनङ्कर्तुमशक्नुवन् क्षुधालुः मुधा कालं नयन् स आपद्गतो जिह्वालौल्यमपनेतुम् जिह्वातुष्टि प्रदं रसनासंतोषहेतुभूतम् स्वादिष्टं भोजनं न लेभे। कूर्चकेन दंतपवनङ्कर्तुम् दशनेषु दंतचूर्णमर्पयितुम् कानिचित्साधनानि नासन् तस्य सविधे येनासौ दंतान् पुनीयात्। तस्य दंता अपि पीतवर्णेन भोजनोच्छिष्ट-मलेनावृता आसन्। दारिद्र्येन पश्चिमावस्था कृता तस्य। पटलाज्ज्वलङ्कलति पिपतिषतीदं स्थूणम् इत्थम् चिंताक्रमाक्रांतोऽभूत्तस्य मनः। कदाचित्कृतयेवा हारं लभमानो कृशतां प्राप्तः। न तस्य भोजनाच्छादनाय पर्याप्तंधनं संपद्यते कदापि। स्वादरहितान्नाभ्यवहाराय परिग्लायन्नपि स यथाकथञ्चिद्भोजनम् निगलति स्म। कदाचित्तरलम् कृशरं मात्रया उपयुंक्ते स्म दग्धोदर-प्रशमनाय। कदाचिद् बुभुक्षाशमनोदकं साधनमलभ-मानोऽनियतवेलमाहारं भुंक्ते स्म बुभुक्षां पूरयितुम्। दिनस्य द्विर्भोक्तुमपि न लभते स्म। विरलाशनः सो ऽभिध्यायति स्म लोकस्पृणान् विषयान्। न किंचिदपि तस्य गृहे परिणाह्यमासीत्। एका गतास्तरणा भग्ना खट्वा तूलिकाविहीनासीत्तस्याम् किलिञ्जम् प्रसार्य बाहुन्युपधाय निद्राभिभूतो शीतेन भिद्यमानः शरदि

तमस्विनीमनैषीत्। ऋद्धिमनुभूय परिक्षीणस्य दुःखः वाह्याभूत्तस्याकिंचनस्य दशा —

लज्जापरवशः भोगनाथो न कस्यापि समक्षम् स्वां हीनां दशां प्रख्यापयितुम् साहसङ्कर्तुमशक्नोत्। ह्रिया अलम्। न लज्जया किमपि सेत्स्यतीति सुविचार्य स लोकानां समक्षङ्कथमुवाह। अशनायापिपासेऽवगणय्य कस्मै अपि नावेदयद्यदहं वृत्तिहीनो वृत्तिमभिलाषुकोऽस्मि। अहञ्जीवनेऽस्मिन् परमां तृप्तिमायातः सर्वथा निर्व्यथेच्छो निःस्पृहोऽस्मि संवृत्तः इत्येव प्राकाशयत्। आत्मनो रिक्तदशां विभवमद्दताञ्जनेभ्यो निवेदने स लज्जामवहत्। वैकल्यमवगणय्य स आत्मनो मानम् अपरिक्षतं रक्षितुं प्रायततराम्। आत्मनोऽनर्थित्वं जनानामग्रे प्रकटने स त्रपया अमरिष्यत्। आत्मानम् सुखोपभोगभाजम् परमानन्दभरितमेव प्राचकाशत्। त्रपाभिभूतः स आत्मनोऽर्थकदर्थनां निह्नोतुमेव यत्नं व्यधात्। परावृत्तभागधेयानाम् दशाम् प्राप्तोऽपि स सञ्जातलज्जः आत्मनो धनवैकल्यङ्कस्यापि समक्षम् न प्रकटयति स्म। समृद्धकुलोद्भवस्य मम वित्तस्य गणना नास्तीत्येव स व्यञ्जयति स्म। स लोकानाम् अग्रत उल्लसितचित्तं संतुष्टहृदयमेवात्मानं न्यदर्शयत्। आत्मना विकत्थ्य दर्पमुद्वहन् स लोकानाम् पुरतः आत्मानम् प्राचीकटत्। प्रकामं विशदांतरङ्गः स लोकानामग्रे जञ्जभीति स्म॥

एकदा वसुन्धरा देवी तम् व्यहरत्तत्र संवृद्धितम् गाढम् कृच्छ्रत्तामं पटच्चराणि परिदधश्च शरीरं विलोक्य जनाः तव विषये किं चिंतयंति। नूनम् ते स्वाम् दारिद्र्यसखम् प्रच्छाणकम् क्षुधार्तं क्षुधापरिगतं

बहुतरम् नरम् मंस्यंते। एवंविधाः क्षुधादिष्टा दुर्विधा दुर्गताः दारिद्र्याभिभूताः नराः जगति अपध्वस्यंते अवमन्यंते तिरस्कारपात्रम् धिक्कारपात्रञ्च भवंति। अधिक्षिप्यंते भृशाङ्कुशाग्रैश्च ॥

'नाहम् मानभङ्गम् सोढुमुत्सहे। न कोऽपि माम् अवज्ञायते। अहमेतादृशः विचारस्य तेषाञ्चित्तसि समुत्थानाय अवसरमपि न ददामि क्षणमात्रम्। तान् मिलित्वैवाहम् आत्मकथाम् उपन्यसितुम् प्रारभे। तेषाँ सूचनाय अहं तेभ्यः कथयामि सुराङ्गनाप्रार्थित यौवनश्रियः नार्यः कांत्या शरच्चन्द्रलावण्यकारिण्यः वाराङ्गना माम् धनधान्यसमृद्धः धनसम्पन्नः श्रेष्ठीति मत्वा मामनुधावंति स्व प्रणयपाशे च माम् बद्धुम् प्रयतंते। माम् गमनाय नानुजानंति। मम वस्त्राणि गृहीत्वा प्रसभं मामाकर्षन्ति. येन मम वस्त्राणि विदीर्यंते। जगति अयम् नियमः यश्च लोकानां रुच्यो भवति तस्यैवावरणं विदीर्यंत यथा कदलीफलम् भवताम् रुच्यम् प्रतीयतेऽतो तस्य त्वगपनीयते। अजामाँसं भवतां रस्यं भाति, अतोऽजाचर्मापह्रियते। पुनश्च ताः सततम् मां बाहुभ्याम् गाढमालिङ्गंति परिष्वजंति आश्लिष्यन्ति परिवेष्टयंति। अत एव मम शरीरम् पुष्टिम् नाप्नोति न वर्धते नाप्यायते। कुतः मे पुष्टिः स्यात्। जानंत्येव भवंतः चीनदेशनारीणाम् चरणा आबाल्यात्सततम् कर्पटपरिवेष्टितौ न वर्धंते यावदायुः अर्भकचरणप्रमाणा एव अवतिष्ठंत' ॥

परंतु तव पीतवर्णदन्तान् दृष्ट्वा तु ते एतदेव ऊहंति यदसौ आट्टकापणादुत्पतितान् उच्छलितान् आपणस्य परितः वीथिकायाम् वा इतस्ततः पतितान्

अर्जितान् चणकान् छित्त्वा भुक्त्वा नन्दति स्माह वसुन्धरा।

बहि २ कदापि न। प्रत्युत तं तर्कयति यदहम् भोज्यकाले बहुवित्तनाशं करोमि। बहूनि अण्डानि भक्षयामि। अत एव मया लोकैः अण्डस्फोटनानंतरं रिक्तीकृतानि गृहाद् बहिः प्रक्षिप्तानि अण्डशल्ककानि छित्वा २ समानीय स्वगृहस्य बाह्यतः विकीर्णानि। चणकस्य तुषं तु कृष्णवर्णः। यश्चणकान् चर्वयते तस्य दंताः पीतकृष्णोभयवर्णकणैरावृता जायंते। परंतु अंडा भक्षिताः दंतेषु पीतवर्णस्पर्शन्ति इति अनुमितिः। अंडभक्षणानंतरं गृहं परितो विकीर्णानि अण्डशल्ककानि प्रत्यक्षम् अयम् मम अंडभक्षणस्य व्यवहारे प्रत्यक्षानुमाने इति द्वे विधे प्रमाणे। यच्च प्रत्यक्षानुमानाभ्याम् सिद्ध्यति तदेव लोका मन्यते। नराः प्रत्येकम् मन्यते ध्वाङ्क्षः कालः बकश्च श्वेतः। इति कथम्? काकः तस्करवृत्त्या परवस्तु अपहृत्य उड्डीयतेऽतः स मलीमसचित्तः। यस्य चित्तम् मलीमसं तस्य बाह्यावरणमपि मलीमसमेव भवितुम-र्हति यथा गोणीसम्भृता इङ्गाला गोण्यामपि कृष्णवर्णं अर्पयति। बकस्तु ध्यानावस्थितचेतसा भक्तिं करोति तस्य चित्तम् स्वच्छं निर्मलञ्च। अतस्तस्य बाह्यावरणमपि श्वेतम् शुभ्रम् इति अनुमानं प्रमाणम्। वायसः पर वस्तु अपहृत्य सर्वेभ्यो आत्मानमपहृत्य निभृतं भक्षयितुमुद्यते। अपहवाय कालवर्ण उपयुक्तः। बलाहकस्तु भक्तः भक्ताय उपहारानयनेन स्वर्गप्राप्तिः। ज्योतिष्टोमे निहतः पशुः स्वर्गं गच्छतीति स्मृतः। यदि कश्चिदात्मोपहारं कुर्यात्तस्य तु ध्रुवम् मोक्षः।

अतो मीना आत्मानँ तस्मै उपाहरंति। स तेषां बलिम् स्वीकरोति। परेभ्यः प्रोत्साहनदानाय प्रकाररूपेण तत् कर्तव्यम्। प्राकाश्यङ्गते कर्मणि श्वेतवर्णम् रहःचरितत्वँ भजते। अतो बकः श्वेत इति प्रत्यक्षम् प्रमाणम् ॥

भोगनाथस्य कक्षा एकस्य सङ्कटसञ्चरस्य पार्श्वे स्थितासीत्। नातिदूरे एको विद्यालय आसीद्यः इदानीं ग्रीष्मावकाशे संवृतः आसीच्छात्राश्च यथा स्वम् गृहाणि गता आसन्। तस्यैकः प्राध्यापकः सदाशिवः तस्यागारस्य अभ्यर्णे निवसति स्म। तस्य भोगनाथेन सह कुतश्चित्कालात्पूर्वं सौहार्दारम्भो जातः। क्रमेण सौहार्दस्य विजृम्भणेन स इदानीं भोगनाथस्यमित्रेषु एक आसीत्। एकस्यां निशीथिन्याम् दशवादनसमये स सहधर्मिण्या गीतादेव्या सह भोगनाथविषये विचारविनिमयँ कुर्वन्नास्त ॥

'अयँ भोगनाथः कृतसर्वस्वध्वंस इदानीं अनंत क्लेशजातँ सहते। श्रियः दुराराध्या दुरापा दुष्परिग्रहा हतायासँ विना वशे नायांति। विधुरेऽपि दैवे स्व विद्यमानगतिरस्ति यदि स्वापनेयवृत्ते तस्य मतिः कार्यारम्भे प्रसरेत्। विधुरेऽपि समये स वाञ्छा विच्छेदनङ्कर्तुम् प्रभवति यदि सोऽदहस्तितलज्जः कमपि साहाय्यम् याचित्वा कर्मणि रतिं कुर्यात्। परंतु स तु आपन्नोऽपि आत्मानँ सुखस्थं प्रदर्शयति। द्रविणाल्पतया कथँ स आत्मानँ भरते तृष्णां छिनत्ति आत्मनः? तस्य श्रीः प्रमार्जिता। इदानीं सोऽकिंचनः संवृत्तः आहारनिर्वृत्तिमलभमानः स जीविताशया सँश्लिष्टः कथँ प्राणयात्राङ्करिष्यतीति न जाने। किं

तस्य जीवितेन फलँ यत्तस्य आत्मापि दुर्भरः। पितु-रागतँ धनँ सर्वं तेन व्ययीकृतम्। किं तस्य धनस्य उद्धारकविधिर्भविष्यति? का श्लाघा तस्य जीवने? कथँ स धनाभावदुःखजीवितँ शरीरं साधयति? अर्था हि प्राणिनो बहिश्चराः प्राणाः। पूर्वत्र समृद्धिमार्छत् स सम्प्रति व्यृद्धस्तिष्ठति। भिक्षार्थभस्त्रया स भोजनाय अपि धनसँचयनङ्कर्तुमसमर्थः प्रतिदिनम् कार्श्यम् आवहति। स क्षुध्यति तृष्यति परंतु आत्मानम् परमानन्दोपभोगभाजँ प्रकटयति। क्षुत्तृषापीडिताय वार्यशनाभ्यो व्यतिरिक्तँ नान्यत् किमपि रोचते किंतु स भोगनाथः क्षुधाकुलोऽपि परेषाञ्चक्षुषि धूलिक्षेपङ्कर्तुं प्रयतते। धनधान्यस्य स्फाति मम गृहे वर्तते इति प्रपञ्चयति'॥

गीतादेवी प्राह मयापि इदमेव श्रुतँ यदसौ भोगः नाथः महत्कृच्छ्रमनुभवति। क्षुत्पिपासोपशमनाय अनारतँ चिन्तया आयस्यमानो विपद्यमानभाग्यो ऽधुना काकणिकामात्रस्यापि अधिपतिर्नास्ति। अनु-भुक्तप्रनष्टविभवः स इदानीं व्यलीकपरिभूतोऽपि न समुद्गच्छति जीविकायै। एकदा तु अनूर्ध्वानानि पञ्चाहानि तेन भोजनँ न प्राप्तमिति श्रूयते। तस्य भार्या अपि अनुलक्षणाकल्पा विधुरितवदना दृश्यते। अल्पो ऽर्थो कदर्थयति। यत्र केवलँ व्ययँ एव वर्तते नास्ति मनागप्यागमस्तत्र महानपि धनराशिः परिक्षीयते, तस्य धनपालश्रेष्ठिनः आवेशनेषु अस्ति बहु कार्यम्, बहूनयमुपन्नयते कर्मकरान्। अयम् भोगनाथो भवतः सुहृत्। अस्य तत्र नियुक्तये प्रयतताम् भवान्। क्रियताम् यदत्र सांप्रतँ समयप्राप्तञ्च॥

सदाशिवः – मम शिक्षालयेऽपि अवकाशासमर्था-वस्था दुरवस्थापि तिष्ठति । यत्रापि सत्काले तत्कारि-ण्य एव यदि स लज्जां विहाय मत्समक्षे आत्मनः कष्टानुबन्धम् निवेदयिष्यति साहाय्यञ्च याचिष्यते ।। यो ददाति स उदार्णीय एव। श्वो तद् गृहं गत्वाहं इमं प्रसङ्गम् वार्त्ताविषयङ्करिष्यामि । किंतु नाहम् वाञ्छामि तस्य मानसिकभावान् हिंसितुञ्च । यदि स आत्मानं धनिकं प्रकटयिष्यति नाहं तदा तस्य क्लेशाक्रांतं भारायमाणम् जीवनमिति पारमार्थिकम् तत्वम् तस्य पुरतः स्थापयितुम् चेष्टे' ।।

परेद्युः यावदेव प्रत्युषसि नक्षत्रमस्ति रोचिष्णूनि उडूनि मन्दरुचीनि सन्ति तिरोहिता च अंशुमालिना च तमो निरस्तम् सदाशिवोऽह्नाय तल्पमुज्झाञ्चकार । प्रात्यहिकं कृत्यं निर्वर्त्य किंचिदशनपानम् कृत्वा भार्यां अहं साध्वयमीति कथयित्वा संस्थायं परित्यज्य निरयात् प्रापच्च भोगनाथकोष्ठम् । ततो व्यधीरयत्तस्य कोष्ठस्य द्वारम् । द्वारे प्रहृते वसुन्धरा देहल्यां यावदागता तावद् द्वारञ्चापावृणोत् । सदाशिवं दृष्ट्वा प्रत्युत्थाय प्रतिपत्तिपूर्वकं तं सम्भाव्य 'अपि कुशली भवान् ? प्रीतोऽस्मि ते दर्शनात् अपि शिवं भवतः ? इति पप्रच्छ भोगनाथः ।।

कुशलानुयोगानंतरं 'कथमिदं स्थानम् सनाथीकृतं भवता' इति च पृष्टवान् कुतूहलाकुलः ।

अनुभूतातिथिसत्कारः सदाशिवः स्वविद्यालयस्य वार्त्तामकरोत् । पश्चात् किंचित्स्नेहसम्भाषं कृत्वा निर्गति विलम्बोनः आगारे परितो दृष्टिम् प्रक्षिपन् सप्रश्नाकूतं निरैक्षद्भोगनाथम् । कथमिदं शीर्णगेहम्

जीर्णधूसरभित्तियुक्तम् भवतं शोभते? कथं भवान् इह कुनावासः तिष्ठति? कोणभित्तयो निपतिताः सन्ति भूतलमपि तृणांकुराच्छादितम्। न क्वापि प्रकाशान्विता भूमिः दृश्यते। न कोऽपि गवाक्षोऽत्र प्रकाशाय' इत्यपृच्छत्।

भोगनाथ उत्तरमददात् 'वस्तुत इहासीन्महत्तमं सौधं मम प्रपितामहस्य। प्रपितामहो मम महाश्रेष्ठी शील आसीत्। बहवो विपणयोऽपि तस्यायत्ता आसन्। निर्मितोऽभूत्प्रासादोऽयं नानामूल्यदुर्लभोपलजातेन अभिजातः आसीद्भवनविन्यासोऽस्य। तस्मिन्नस्माने प्रासादे मम प्रपितामहो जीवनस्य द्राघिष्ठकालम् व्यत्ययापयत्। अयङ्कोष्ठस्तु तस्य कालिकस्य अतिविशालसौधस्य व्योमस्पृगट्टमासीत्। गवाक्षा अस्मिन्न निर्मिता यतः गवाक्षेन अगारं सातपञ्जायते। हर्म्योपरि स्थितस्याग्रतश्चानोः नेदीयो भवति अतो महान्सूर्माणं तत्र निवसन् जनोऽनुभवति। प्राक्तने काले एको भूकंपो जातः। जानात्येव भवान् यदा भूः प्रकम्पते तदा क्वचिदियम् उदञ्चति क्वचिन्न्यञ्चति क्वचिद्गर्ताः सञ्जायन्ते जलञ्च प्रस्रवति। भूकम्पे तक्षशिलायाः सकलनगरं क्षितौ निखातम्। विदिशानगरे वर्तमानो हेलियाडोरसस्तम्भो भूकम्पे न्यखन्यत पृथिव्यां किं चेदेव भागस्तस्य पृथिव्युपरि तिष्ठति। इदं तथ्यम् स्तम्भे उत्कीर्णमस्ति। एवमेव भूकंपे जाते मम प्रपितामहस्य अखिलं सौधं धरण्यां न्यमज्जत्। अस्य कोष्ठस्य भूतलमप्यधोगतम् भित्तयश्च कुटिलीभूताः। इयमट्टालिकैवावशिष्टा। परंतु दुस्त्यजा जन्मभूमिः। 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसि'। अल्पकेऽपि सपोहे

यथा सुखायावहे न तथा महत्यपि परवेश्मनि। साधयति कोष्ठोऽयम्। पितृपर्यायागतं जन्मस्थानम् त्यक्तुम् न शक्यते।

सदाशिवः—इदानीं मां गन्तुमनुजानीहि इत्युक्त्वा तं भोगनाथं विसृज्य निर्यातः।

गम्यतां पुनर्दर्शनाय इत्युवाच भोगनाथः।

स्वगृहमागत्य सदाशिवः पत्न्या सहेत्थं संलापम् चक्रे।

सदाशिवः—अहं तस्य गेहस्य भग्नदशायाः प्रसङ्गं पृच्छासूचकनेत्रकोणैः कृतवान् येन तेनानुस्यूतां न आत्मनो महादुःखसंक्लिष्टां धनाभावजीवनबाधिनीं दशां मह्यम् निवेदयेदिति अहञ्च जीविकायोजनाय परामर्शं तस्मै दास्यामि। स तु पूर्वमस्मयत आत्मानं च समृद्धैः पराङ्कोटिनाटीकमानानां वैभवशालिनाम् सुगृहिणां पूर्वजानां वंशजमाख्यातवान्। सुखेन मम कालो व्रजति जीवितञ्च सकामम्। आत्मव्ययपरिसंख्यानमेव नास्ति। आनन्दनिर्भरञ्जीवनमतियापयामि स्फीतां सम्पदञ्च भुञ्जे। मम सौख्यस्य प्रतिमं सुखम् किंचिदपि नास्तीति पिशुनितवान्। गृहे तस्य चर्वितुम् धाना अपि नैव स्युः। कदाचित्कस्यचित्किमपि वस्तु स्तेनयति। स्तेयम् विधाय कपटमालम्ब्य शाठ्यम् कृत्वा कानिचिद्दिनानि परिमितपरिमाणेन अन्नेन उदरं बिभ्रदतिवाहयति। एकदा चौरिकायां स लोप्त्रगृहीतोऽभूत् परंतु मर्षितः। बाह्याडम्बरः तस्मै रोचते। न स आत्मनो दुःखबाहुल्यं कस्मै अपि व्यञ्जयितुमीहते॥

गीतादेवी—इदं तु कारणम् येनास्य नोदेत्ययः। भवेदयतः नरस्य स्फुरति सफलः तर्कः चित्तम्

समुन्नतिमश्नुते। कार्यारम्भे आसक्तिर्भवति। स तु अपत्यागतश्चैथिरसनेऽपि स्वैत। मूलात्खातोऽपि विनष्टोऽपि निःस्वोऽपि सन् सुखमुपभुञ्जे भोगान् निर्विशासीत्येव ज्ञापयति सर्वान्। क्लेशस्याङ्गमदत्त्वा सुखेन सुखानि न लभ्यन्त इह लोके। यः तु सुखानि अभीप्सति भूवलये दुःखानि जिहासति तेन तु कार्यं प्रवर्तितव्यम्। उत्तमोत्तमपदार्थान् एकाग्रदृशा विलोकयतः न कस्यचिद् वाञ्छा विनिवर्तते। यः यत्नम् कृत्वा दुःखान्निवर्तितुम् नेहते स दुःखानि व्यपनेतुं न शक्नोति दुःखम् परिहर्तुकामैः अर्थम् उपार्ज्य संचेतव्यम्। धनम् हि सर्वसुखानां साधनम्। यदा क्षुधा बाधते धनमेव क्षुधाम् प्रशमयति। धनाय आशाम् व्यक्तीकृत्य व्यवसायो याचितव्यः येन कोऽपि तदभ्यर्थनाम् सफलीकर्तुं प्रभवेत्॥

कदाचि मे कश्चिः वार्ताऽपि किंचित् प्रकुप्यति। शैत्यात् प्रतिशीनो जातः जूरश्च। भ्रान्तश्च मे शिरसो जाता इत्यब्रवीद्रोगनाथो मत्त्वैकसहचरः कतिपयेभ्यो दिवसेभ्यो रोगान्वितः! न जाने को उल्लघताम् संपादयिष्यति इति पुनरब्रवीद्रोगनाथः शयनं संनिभावे उपविश्य शीर्षवेदनया दुःखितः। प्रस्राव-भाजनम् तस्य शय्याधः आसीत्॥

वसुन्धरा देवी कोष्ठस्य एकस्मिन् कोणे मलीमसानि परिधेयानि कुर्वद्भिः शोधयन्ती उत्थाय एकस्माद् गो-वैद्यादानीतम् भेषजम् तस्मै दत्त्वा पुनोऽभ्युषितानि वासांसि प्रक्षालयितुं प्रवृत्ता। कोष्ठस्य भूतलमपि यथा तथा सुपिच्छिलमभवत् उच्छलितेन वारिणा। "अवस्तब्धोऽस्मि शीतेन। शिरोऽर्तिर्माम् पीडयति।

शैत्यविक्रिया भूता इति स्पष्टम्। मुखवैरस्यञ्जातम् न किमपि स्वदते। कासापनोदे किं उपकरिष्यति? इति पुनः व्याहरत् ॥

'शरीरे स्वेदाद्दतोऽभविष्यन्नोपतप्तोऽभविष्यः' निजगाद वसुन्धरा।

'नास्ति ममात्र दोषः। लुब्धोऽस्मि शीतेन। उत्तरीयं नास्ति किमपि। पुनश्च विवस्त्रः। वैद्येन दत्तमौषधम् कार्मुकम् भविष्यति न वा इति न जाने' उवाच भोगनाथो मञ्चस्थः ॥

वसुन्धरा तस्य वचः श्रुत्वा किमप्यनभिहितवती। वसने संक्रांतम् मलमपनेतुम् आत्मानम् पुनः व्यापारयामास। अपां पूणः पर्याहारः तस्याः संबन्ध आसीत्। मत्कुणयूकामक्षिकाझिल्लिकासमाश्रिते गेहे वासांसि निर्णिक्तानि चकार ॥

संतापय स्वगात्राणि अग्निना इत्युक्त्वा विप्रतिष्ठत्-निस्फुलिङ्गाम् हसँतीम् तस्य समीपमानयत्। 'शात-तुरस्य वह्निसान्निध्येन शीतम् विनिवर्तते। परन्तु वक्त्र-वैरस्यमुत्क्रमयितुम् किं कर्तव्यमिति' चिंतावभ्रमम् परिहाय न्यगादीत् सा केशकलापम् विमुच्य वेणीं विरचयँती ॥

यावदहम् निरामयो भूत्वा तव दुःखोपशमनम् करोमि तावत् त्वम् परमुखप्रेक्षितया कञ्चित्कालम् यापय। कस्यचिद् गृहस्थस्य भोजनकाले उपतिष्ठस्व। स त्वाम् भोजनेन निमँत्रयिष्यत्येव इति परामृशत् भोगनाथः। वसुन्धरा वस्त्राणि निर्णिज्य शोषणाय आतपे रज्ज्वाम् अवलँबितवती ॥

कतिपयेभ्यो वासरेभ्यो मञ्चकशरणो भोगनाथः

भूमण्डले आवाभ्याम् सुदूरं पर्यटनाभ्यासः कर्तव्यः येनायम् विपदामाश्रयो जीवितकालः सुखं यास्यति। यम् देशमावाम् उपपद्यावहे तद्देशीयवृत्तपत्रेषु सूचनां दास्यावः यद् आवाम् अस्य देशस्य कानिदिनानि अतिथी स्वः। अस्य देशस्य आचारव्यवहारौ रीतिनीतेः अध्ययनार्थागतौ। अस्य देशस्य आर्थिकसामाजिकस्थितिं उपलब्धुमायातौ। तद्देशवास्तव्याः आवयोः आतिथ्यकारितां आश्रयिष्यंति –

सम्प्राप्तो योऽतिथिः सायंसूर्योढो गृहमेधिनाम्
पूजया तस्य देवत्वम् प्रयाति गृहमेधिनः।

इति स्मृतेः। 'अतिथेश्च पूजा कर्तव्या' इति शास्त्रादेशः। असत्कृते च उच्चावचं भोज्यपेयादिकं परिवेष्टुमारप्स्यंते। परिवेषितं भोज्यं प्राप्य अस्माकम् भाग्यविपर्ययो गतो भविष्यति। ततः कानिचिद्दिनानि कृतातिथ्ययोरावयोरवस्थानं कश्चिद्वार्तापत्रप्रतिपुरुषः आयास्यति। अस्मद्देशविषये युवयोः को विचारः किं मतम् स्वीकृतं युवाभ्यामिति च प्रक्ष्यन्ति। तदावाम् इत्थम् वक्ष्यावः –

'एतद्देशनिवासिनः परमविनीताः सदाचाराः सभ्याः विनयशीलाश्च संति अतिथिसेवाञ्चात्मनः परमं धर्मम् मन्वते। अस्य देशस्यार्थिकदशापि तोषप्रदा दृश्यते यतः एतद्देशीयाः भोजनपानादिषु पुष्कलं धनं व्ययीकुर्वंति। एतद्देशवासिनः सङ्गतिकामाः मैत्रीभावेनानुप्राणिताः विद्यंते – – इति'॥

आवयोः विचारान् समाचारपत्रे पठित्वा अन्यद्देशीया अपि आवाम् आतिथ्येन निमंत्रयिष्यंते। अतिथिप्राशस्त्यगर्भया गिरा आवयोः स्वागतम्

विनिनेष्यँति। ततः पर्यटन्तौ आवां तँ देशँ गमिष्याव तद्देशीया अपि अस्मदर्थमभ्यवहार्यमुपकल्पयिष्यँति भोजनेन च निमँत्रयिष्यँते । तैर्विरचितां सपर्यां गृहीत्वा अस्माकं जीवनसौकर्यं सम्पत्स्यते । ते च संमेलय संलापङ्करिष्यँति आवयोः भावान् प्रदर्यँति। अन्योऽन्यस्पर्धया अपरदेशवास्तव्या अपि आवाम् 'प्रसादँ कृत्वा अत्र आगम्येताम्' इत्यभ्यर्थयिष्यँते। मुक्तहस्ता आवाभ्याम् व्ययङ्करिष्यँति । तदा तैः अभ्यागताभ्याम् भक्तमुपपादितँ सत्कारं गृहीत्व विस्रम्भालापम् कृत्वा पर्याटम् २ आवां प्राघुणिक रूपेण देशाद् देशांतरं गमिष्यावः स्व सङ्कल्पञ्च विनांतरायँ साधयिष्यावः। यँ २ देशमावां गमिष्यावः तद् तद्देशीया अन्योऽन्यस्पर्धया अन्यान् देशान् अधरीकर्तुं शोभनँ मतञ्च प्राप्तुम् अतिथिसत्कारे अन्यान् देशान् अतिशयितुम् प्रयतिष्यँते। पुनश्च यदा ते यँत्रगुलिकाप्रक्षेपणीमादाय त्रिवारं आग्नेयचूर्ण प्रक्षेप्स्यँति आवयोः स्वागतँ व्याहरिष्यँति तदावाम् पत्रेषु इत्थम् मतँ दास्यावः यदेतस्य देशस्य सैनिकस्थितिः भयङ्करा। तेन सह संग्राममयमाणो देशः प्रतिपत्तिं न लप्स्यते। एकस्य मनुजस्यागमने त्रिवारं अग्निवर्षम् कुर्वँति। सहस्रजनव्यापृतस्य सैन्यस्यागमने त्रिसहस्र-वारं आग्नेयचूर्णं प्रक्षेप्स्यँति। एको मनुजः स्तम्भस्य पृष्ठभागे निलीय अस्मानकस्मादपि रुन्ध्यात् परंतु सहस्रं मनुजाः कुत्र आत्मानम् निलेतुम् शक्नुयुः'।

तदा अन्ये देशाः सातङ्का भविष्यँति।

प्रस्तुतप्रसङ्गस्य विशदीकरणे सन्निबद्धा कुतूहल परवशा वसुन्धरा इत्यगादत् 'विवर्भावाभावयुक्तं

ऽस्मिन् भूलोके आवाङ्कथम् स्व विचारान् स्फुटी-करिष्यावः' ॥

भोगनाथः प्रत्यवादीत् 'एकः पुरोगः भोजनार्थी आवाम् पुरतो गच्छन् मार्गमुपदेक्ष्यति । स पथिप्रज्ञो ऽध्वानन्दर्शयिष्यति । स एव नः प्रतिपक्षशः आवयोः भावान् अनुवदिष्यति । एवं सर्वैः देशैः प्रतिबद्ध-सख्यौ आवां विचरिष्यावः' ॥

वसुन्धरा किञ्चित् संशयमापादिता पुनर्जगाद 'परंतु देशाद् देशांतरगमनस्य मार्गयात्राशुल्कादं म् धनमपेक्ष्यत इति तु न विचारितम् त्वया' ।

भोगनाथः— 'इदम् तु नितांतम् सुकरम् । यदि वयङ्कस्य गृहङ्गच्छेम तदा प्रस्थानसमये सोऽस्मान् स्वगृहदेहलीं यावदनुगच्छति । एवम् यस्य गृहम् वयङ्गच्छेम स स्वगृहदेहलीं यावदस्माकम् स्वागताय आयाति । अतो यम् देशमावाम् परित्यज्य गच्छावः तद्देशाधिकारिणः आवाम् तद्देशमर्यादां यावदनुव्रजिष्यंति । यद्देशमावाँ प्रवेक्ष्यावः तद्देशीयजना आवयोः स्वागताय स्व देशसीमां यावत् प्रत्युद्गमिष्यंति । स्व देशसीमातो आवाम् देशान्तरमानेष्यंति । इदम् सर्वम् तेषां व्ययेन सम्पत्स्यते । एवमस्माकम् विश्व-यात्रा मूल्यविवर्जिता भविष्यति ॥

वसुन्धरायाः ललाटे आशारेखा प्रोद्भिन्ना मुखञ्च दीप्तमजायत ।

भोगनाथः भार्यासहितः कटम् कक्षे कृत्वा पोट्टलिकाम् स्कन्धेन वहन् वस्त्रमँजूषाम् अंसे समारोप्य विश्वयात्रायै प्रतस्थे ॥

... * ... * ... * ... * ... * ... *

एकदा कस्मिंश्चिद् जनसंमेलने परः सहस्राः नरा समेता आसन्। जनसम्मेलोऽयम् कस्यचिद् विदुषो भाषणम् श्रोतुम् तत्र सङ्घटित आसीत्। जनसंमर्दस्य पृष्ठभागे एको मनुष्योऽग्रेसतुमक्षमो भाषणमाकर्ण-यितुम् अनुपृष्ठं संस्थितः आसीत्। कश्चित्तस्य विद्वेषो यस्य तेन सह वैमनस्यमतितरामुपचितमासीत् यस्य च हृदयम् तस्मादुद्‌तामयत् प्राप्तावकाशः स मुखम् प्रावरणेन स्थगयित्वा तम् मनुष्यम् पृष्ठभागे उपानहा ताडयित्वा पलायाञ्चकार। सर्वः जननिवहः मुखम् परावृत्य तस्याम् दिशि व्यलोकयत्॥

कश्चिन्नरः पथि आगत्य तस्य वदनाद् आवरकम् अपनीय तस्य मुखमुद्घाटितवान्। व्याहन्यमान-मानः तद्प्रयासविघ्नितः स जाल्मः तस्य पथिकस्य मुखोपरि तलप्रहारं दत्त्वा 'रे रे धूर्त ! किमर्थम् त्वया मम मुखमपावृतम् अहञ्च कष्टे निपातितः? त्वया इदम् अवैधम् कृतमिति व्याचष्टे॥

'इदानीं स मनुष्यः स्वयोपानहा ताडितः लज्जास्पदीभूतो व्रीडितो लज्जामालम्बते। अतस्तस्य मुखावरणाय मयेदम् आवरकमपनीतम्। त्वम् तु आकृष्टलीलः विजयीभूतः गर्वास्पदः स्तोत्राहश्च जातः। सर्वे ते जनाः त्वाम् प्रेक्षितुकामाः तव मुखम् द्रष्टुम् समयम् परिपालयन्ति'॥

— — — — — — — — — — — — —

उल्लाघो भूतः । व्याधिना ध्वंसस्तस्य देहस्य व्ययाथि। यदि काचित् सुगंधितैलप्रसाधितकेशकलापा विविधभूषणालंकृतप्रयत्नचाकचक्यां हिरण्मयसूत्रांकितपट्टाम्बरधरा प्रमदा वसुन्धरायाः नयनपथे आयाति स्म तदा तस्यां दृष्ट्वां खेदद्योतको विकारो व्यलोकयत् । वयस्यता च तस्या वृद्धिङ्गच्छति स्म । आधिश्चात्मनो रहसि रहमानलिप्सुरिव सा । जटिलचिताकुलिता लायतोच्छ्वासँ सा औदासीन्यमवलंब्य गृहकार्येष्वप्यशक्ता शैरुद्वेजिता विषादपरिवाहिना नयनयुगलेन भूयिष्ठमहोऽनयत् ॥

चितासङ्घातप्रहतापरिततमानसेन सा अवर्णनीयां व्यग्राकुलताञ्जगाम । गुरुतरचिन्तया कवलीक्रियमाणा सा अनुक्षणँ दीर्घं निश्वसिति स्म । चिन्ता निर्मर्यादेव वृद्धिमारूढा तां विक्लिशतराम् । विषादस्य कोटिं समारूढा शुष्कानलेन प्लुष्टा स्वगृहे एव सदा तस्थौ। विहारसुखोपभोगायापि न गच्छति स्म । पर्यटनासक्तिसुखावहानाँ वातानां स्पर्शसुखञ्चापि त्यक्तवती सा । उत्तरोत्तरं कृशिमानमापद्यत तस्याः शरीरम् । गाढचितासंतानमग्ना क्षीणाङ्गा सा भोगनाथस्यानने दृष्टिं स्थिरयँती इत्थमभाषिष्ट :-

'कथँ त्वम् तरुणजीवनध्वँसनङ्करोति अव्ययापृतः स्थित्वा । गृहेऽशनजातँ मिलिष्यति न वा इति न कदापि निश्चितम् । न ह्यत्र किंचित् प्रपञ्चसुखोपभोगो न च जीवनसौकर्यम् । त्वया तु क्षणस्यापि अपव्ययो न कर्तव्यः । किमेवँ निरर्थकङ्कालम् यापयसि ? को लघयिष्यतीमँ विपद्भारम् ? कदायमुपवासावधिः पूरयिष्यते ? कदा भविष्यत्यस्य पारणा ? कायो

वैकल्यमाप्नोत्। अहम् तु गलितधैर्यास्मि सञ्जाता। लोके धीरधौरेयापि विश्रुता इदानीं विधुरितधैर्यास्मि सवृत्ता। अधुना न स्थीयते मया। आत्मानम् संधारयितुँ न शक्नोमि। इयमापत्परम्परा कदा अंतँ यास्यति? अहम् तु निर्नाथेव निरालँबनास्मि जाता। निवृत्तोद्वाहवेदिकाँ मङ्गलसूत्रमालिकाँ धृत्वा तदाहम् न व्यजानाम् यदहम् एवँविधम् वैकल्यग्रस्ता एतनेन गृहीता च भविष्यामि। त्वादृशाम् प्रतिभाशुन्यानाम् तरुणानाम् गृहेऽनशनपानदुःखपारावारमपारम् उत्तरीतुमपारयँती त्राणहीना दुःखितमना च भवामि। धनोपार्जनकार्यँ व्याप्रियस्व। वित्तमर्जय इत्येव मम आशँसा' ॥

भोगनाथ उवाच 'कस्यैकान्तँ सुखमुपनतँ दुःखम् वा। सुखञ्च दुःखसंश्लिष्टमेव विद्यते। सर्वस्य सुखदुःखे अनैकान्तिके। न हि कण्टकात् सुमनसो व्यतिरेकेण चरंति। न हि सुखम् दुःखेनासंभिन्नमस्ति। न हि सम्पदो विपद्भिरननुस्यूताः भवँति। तत्स्साध्याण्वः सोढुम् सर्जेत्। किं ते स्मृतिभ्रंशः समजनि तेषाम् मादकदिनानां यदावाम् आभरणानि विक्रीय सुखेन अशनपानम् कृत्वा विश्राममकुर्वे। चक्रवत्परिवर्तंते सुखानि च दुःखानि च इत्याभाणकः। सुखोपरि दुःखँ संभाव्यत एव। अतो नास्त्यत्र किमपि चित्रम्' ॥

वसुन्धरादेवी तस्याभाणकँ श्रुत्वा निरुत्तरा तस्थौ। कतिचिद्दिनानि वसुन्धरा प्रत्यैक्षत् कदाचित्तस्याः भर्तुः मतिस्फुरणम् सम्भवेत्। परंतु तस्या इयमाशा फलोन्मुखत्वँ नापेदे। पतिः तु यथापूर्वम् निर्विशेषम-वस्थितः। पत्युः व्यवसायाभावात्सा शून्यहृदयमात्मानँ

अपश्यत्। विषण्णमना पांडुवदना करपल्लवौ नैराश्येन संपीडयँती नश्चितनैष्कतानमानसा स्खलिताक्षरैः तदेवं तवृत्तं पुनः पतये शँसितुम् प्रचक्रमे ॥

किं त्वया चिन्ततँ जीविकापादनाय ? नैष्फल्यमेव उपनतं किं तं प्रयत्नस्येति स्वाशयनिष्पत्तिरसँभव भावनया अनिमिषँ न्यरूपयत् सा पति दुःसहदुःखाभिहता।

भोगनाथः प्रत्यवादीत् 'यो भगवान् द्विपदश्चतुष्पदश्चाभावयत् सोऽस्मदर्थँ भोजनव्यवस्थाम् विधास्यतीति निश्चप्रचम्। कथमहमात्मनो दुःखम् अपकर्षामि सुखञ्च प्रकर्षामि। सर्वमेव दैवायत्तम्। विधिविनियोगादेव सर्वम् । आश्वसमयस्व तावत् । अस्माकँ पँथाः ऋजुः भविष्यति। य आपत्सु न शोचति न मुह्यति न व्याकुलायते स एव पुमान्! मम मनस्तु एतस्मिन् विषये वितर्कपदवीं न समारोहति। असद्वेहँ एवँ भविष्यति । अतः शोचितुम् विषँतुम् नार्हसि त्वम्' ॥

वसुन्धरा तु धैर्य्यात् कदाचिद् गतिमाप्नुयात् स इत्यवमृश्य तस्य नये स्थिता सर्वद्दैवाधीनम् कृत्वा आश्वस्ता तूष्णीमवस्थिता।

कानिचिदहानि सा विश्रांति भेजे। पुनः चिंतितवती। किं स्यात् किं उचितँ ममोपदेशस्य। न किमपि। असौ स्वैरवृत्तः। विगलितधैर्या सा पीडां सोढुम् अपर्याप्तवती दुःखभारेण सीदँती तीव्रयातनयाविष्टा पत्युः सम्मुखीना तस्थौ ॥

'दैवम् दैवमिति कथनेन दैवमनुकूलँ प्रसादकञ्च न भवति। स्वयमेव भोजनँ वक्त्रे न प्रविशति। किमिदँ

नरकयातनामयजीवनम्। जातास्मि व्यसनसंतप्त-हृदया। खिद्यते मे चेतः। अविरतम् तावत् द्रव्योपार्जकव्यवसायः इति तम् प्राणुनुदत्॥

भोगनाथः पत्नीप्रतिधैर्यञ्जनयन्, प्रियशत मधुराभिः शोकापनुदाभिः वाग्भिः सांत्वगिरा ताम् आश्वासयितुम् प्रारेभे।

धैर्यं न त्याज्यम्। किं संतप्यसे? स्वदारे चिन्तम् अनिवृतम्। अतो गच्छामि तावत्। न निर्वर्त्स्यामि यावन्मनोरथः सिद्धो न भविष्यतीति ताम् सुधीरम् स्थिरीकृत्य पर्यवस्थापयामास॥

स्वयञ्च गृहान्निर्गत्य व्यवसाय.चिंतापरो बभूव।

अखिलाहो वसुन्धरा एकाकिनी गृहीतांतरात्मा चिराद्भूताभिलाषस्य परिपूर्त्यैकहृदया तं प्रतीक्ष-माणा तस्थौ। भर्तुः वचः स्मृत्वा न तस्या व्यथा शिथिलीभूता परिशांतिमभूच्चान्तरङ्गम् तस्याः। 'स हन्त व्यर्थो गृहान्निर्यात इति अपरिच्छिन्ना ममाशंसा" इति सा स्मरात्॥

पर्यंते फलितो भविष्यति मम मनोरथः। सायम् यावत् स निवर्त्स्यते गेहमिति उत्सर्पिण्यः आशाः बिभ्रती सा अखिलाहनिमेषान् गणयंती आस्त॥

अपराह्णे निवर्तितो गृहम् प्रति भोगनाथः।

वसुन्धरादेवी औत्सुक्यभाजा मनसा अपृच्छत् 'आसादितः कश्चिद्व्यवसायः'?

भोगनाथः – 'व्यवसायस्तु नासादितः। परंतु उपाय.श्चिततो निरुपमः उदरभरणाय'।

वसुन्धरा – 'कः सः उपायः?'

भोगनाथस्तस्याः कुतूहलपूर्त्यै व्याजहार 'अस्मिन्

तस्मादर्थजातादत्यधिकं धनं तस्य सविधे विद्यते स्म। महदैश्वर्यं संपन्नस्यापि तस्य तृष्णाया उपशमनं नु भवति स्म॥

रूप्यकाणामन्वेषणे संलग्नो धर्मनियमान् सदाचारानपि उल्लङ्घयितुम् प्रभवेत् कपूयाचरणः कौसृतिको वसुपतिः। नासौ नियतो न च प्रयतो न कोऽपि तस्य सिद्धांतः। स तु केवलं स्मीर्तयति स्म। परकीयमर्थमपि अभिध्यायति स्म। स्वर्वानपि स उत्तरोत्तरं स्वो मे स्यादित्येवाभ्यलषत्। अर्थानुसरणे स आत्मानं पातयितुं सदैव उद्यत आसीत्। आजीवं संपादयितुम् एव न सोऽकामयत परंतु येन केनापि उपायेन प्रभूतार्थोपलब्धिम्। यथाकथमपि तस्य लक्ष्मीर्ज्वलिता भवेदित्येवासीदनुवेलश्चिंतनं तस्य। जनाः तस्य चरित्रविषये किं विचारङ्करिष्यंतीति सोऽपसारितलज्जः सर्वथा उपैक्षत। स उद्वेलः तञ्चयित्वा कपटमाश्रित्य न्यायव्यवस्थाभंगेन वा धनमानेतुम् प्रयेते। कौलीनां परिहर्तुम् वाच्यं परिमार्ष्टुं वा न स मनो निदधे। या कापि अनौचिती किमु न क्रियेत स तु केवलं ऋद्धिमानेव भवितुम् स्पृहयां बभूव। तृष्णा तस्य सर्वदा तरुणायते स्म॥

न्यायालयानां अधुनातनी अवस्था तं विशेषरूपेण उपचकार। अन्तर्दर्शका विधानानां विधेयतया नानुवर्तते प्रत्युत विधानानि अनाद्रियमाणा जल्पवितंडावादैनैवात्मनो विधानानुविधायित्वं प्रकाशयंति। 'स (जल्पः) प्रतिपक्षस्थापनाहीनो वितंडा' इति गौतममुनिरचितन्यायदर्शनस्य सूत्रम्। वाचाटतामाश्रित्य आत्मनः पातित्यम् लोकेभ्यो निह्नोतुम् स्व निर्णयान्

व्यवहारानुकूलतामुपपादयितुं यतते। मिथ्यायुक्तिभिः व्यवहारग्रंथगतशब्दानामनर्थीकरणेन( नपरीतार्थकरणेन) च परेषाञ्चक्षुषि धूलि निक्षेपेण आत्मनः स्वेच्छानुवर्तित्वं विधाय स्वमानाम नेतृत्वं ख्यापयन्तो ते चेष्टन्ते। एतादृशि व्यवस्थायां येषां बुद्धिः क्रमते तेषामन्यायनमग्नानाम् मिथ्योपपत्तिभिः अनर्गलप्रलापेन च न्यायम् प्रतिहत्य अन्यायमाचरताम् साहाय्येन स स्वार्थमभ्युद्धरत् ॥

एकदा वसुपतिर्मनोज्ञवेषः स्वं मरुत्तरेण 'पौं पौं' कुर्वन् देहलीनगरे आनन्दमार्गनाम्नः पथा याति स्म राजनियमेन इयं व्यवस्था व्यवस्थापिता यद् यानानि पथः सव्यहस्तेन गच्छेयुः। न कोऽपि इमां व्यवस्थाम् अतिक्रामेत्। परंतु वसुपतिर्मार्गस्य सव्येतरहस्तेन गच्छति स्म। तस्य शासनव्यतिक्रमस्य विपाकविस्फूर्जथुः प्रसह्य एव समजनि यदेको रामनारायणाख्यो पथा पादचारी प्रतीपदिशा स्व सव्यहस्तेन आगच्छन् तस्य यंत्रवाहनेनाभिहतः भूरिरुधिरप्लुतः भूमौ पपात। क्षतविक्षतविग्रहः विकृताङ्गः उच्छूनश्चाजायत। उत्थाय चात्मानम् विलङ्गितं ददर्श। पदात् पदमपि क्रमितुम् विलङ्गति स्म। स च पुररक्षास्थानं गत्वा नगरपालाय आवेदयत्। नगरपालः साक्षिणः आहूय शपथैः भृशम् नियम्यापृच्छत्। तेषां वचनैश्च बद्धावधानो बभूव। सर्वे ते निराकाङ्क्षाः साक्षिणः रामनारायणस्य निर्दोषतासूचकम् साक्ष्यमब्रुवन्। नगरपालो वसुपतिमभियुयुजेऽधिकरणस्थाने तेन दोषेण। आधिकरणिको नरेन्द्रनाथनामा कश्चिद् आसीन्मनोहरनेपथ्यः। सर्वेऽनभिसम्बद्धाः मित्रादि-

भावरहिताः साक्षिणः धर्माध्यक्षस्य पुरतो रामकारार्थिनस्य पक्षे साक्ष्यम् ददुः । रामनाथस्यापोऽभियोपितव्रणः सञ्जातः आधिकरणिकसमक्षे आत्मानम् राजनियमानुवर्तिनमच कथद् वसुपतिना च राज्ञः नियमो विपर्यस्तः इत्यसूचयत् । व्यवहारपदे यावद् निर्णयमासीत्ततः प्रागेव वसुपतिः नरेन्द्रनाथस्य गृहम् गतः। 'भोः! भवन्तम् दिदृक्षुः कश्चित्समायातः' इति नरेन्द्रनाथस्य सेवकेन स्वामिने निवेदितो वसुपतिस्तं चानिवृत्तानामाकारं बिभ्रतं पर्याकुलितचेतसम् व्यलीकस्य सोढारञ्चापश्यत्। नरेन्द्रनाथस्तस्मिन्नश्रुणि पातयत् । एकान्तमासाद्य द्वौ जनौ अन्योऽन्यबद्धचेतौ चाज्ञायेताम् मर्मस्पृगालापांश्च कर्तुं प्रवृत्तौ। नरेन्द्रनाथो दीर्घमुष्णम् निश्वस्य स्व मर्माणि उद्घाट्य वसुपतये कथयामास यस्मादिदम् अस्फुटमभवत् ॥

नरेन्द्रनाथः पूर्वम् उच्चपदे प्रतिष्ठित आसीत् । शासनेन उत्कर्षात्प्रच्याव्य अत्र नियुक्तः। तत्पदे च अन्यः सन्निवेशितः। स्थानभ्रंशात्तस्य तु मातामही मृता इव । हृदि तस्य शल्यमर्पितम् । अत्यरिच्यतास्य मन्युः। स प्रतिष्ठाया अलीकदर्पेण स शासनं भृशम् निनिन्द । सुभृशाभितप्तहृदयः स दुःखशमनोपायम् अवमाननस्य प्रतिक्रियाञ्च नाज्ञासीत् । तं शोकेन दह्यमानमानसम् चारिप्लुतनयनञ्च दृष्ट्वा स उत्पन्नप्रतिभः वसुपतिः आत्मनो भविन्रीं सिद्धिं उदपश्यद् इत्थञ्च व्यभावयत्। यदा वाष्पयाने वारिवह्निसंयोगो भवति तदा वयम् तदारुह्य यया दिशा वयमिच्छेम नेतुम् पारयामः। अस्मिन् मुहूर्तेऽस्मिन्नने ज्वलज्जलसंयोगो दृश्यतेऽतोऽहम् तं वांछितदिशा नेतुम्

प्रभवेयम्। स आत्मानँ कुतद्वदँ समदुःखभाजम् विषमस्थस्य जनस्य अभ्युपपत्तारं दर्शयित्वा अंतर्लीनँ विहस्य इत्थमनुकम्पापिशुनँ वचो उदीरितवान्। 'शासनेनैव भवतः प्रति अयमन्यायोऽनुष्ठितः। शासनाधिकृतैः नगरपालैः कृतेषु अभियोगेषु प्रत्येकँ भवता शासनपक्षविरोधे व्यवहारो देयः। न कस्मिन् अपि अभियुक्ते दँडो निपात्यः। अनेन भवतो वैर-निर्यातनँ भविष्यति'॥

नरेन्द्रनाथो व्यमृशत्। विमृशतस्तस्यांतःकरणे कर्तव्यस्य स्वस्य प्रतिष्ठायाः द्वंद्वम् प्रावर्तत। आत्मनः प्रतिष्ठाविलोपो न कर्तव्यः। अंततः प्रतिष्ठाभावेन जितम्॥

अपरेद्युः नरेन्द्रनाथो विचार्यमाणँ व्यवहारमधि-कृत्य विवादनिर्णयाय इत्थमवोचत्—

'अयम् वसुपतिः पथः दक्षिणेन याति स्म। अस्य तु दक्षिणा गतिः। त्वम् तु पथः वामेन गतोऽभूः। तव तु वामा गतिः। दक्षिणा गतिस्तु निपुणा गतिः। वामा गतिस्तु कुटिला गतिः विपरीता गतिः। अयमे-एतयोः शब्दयोः कोशगतोऽर्थः। कोश एव समस्त-व्यवहारपुस्तकानामर्थस्य स्पष्टीकरणाय साधकतमम् प्रमाणम्। अतः त्वमेवात्र अपराध्योऽसि। त्वमेव अस्मिन् विषये दँडप्रदानमर्हसि धनदण्डम् वा। अभि-युक्तस्तु निर्दोष एवायम्। येन दोषेणायम् सम्भावितः सोऽस्मिन् स्वप्नेऽपि न सम्भाव्यते'॥

वसुपतिः मुक्तोऽभवत्।

वसुपतिः धनमेव जीवितसर्वस्वम् मन्यमानः स्व स्वम् अपोलयितुम् परपरिग्रहमोपाद् न सङ्कोचम्

मेजे। दाम्भिकमायिकवृत्त्या परपरिग्रहे स्वाधिकारं स्थापयितुञ्च अयतिष्ट। लोकानां धनानाञ्च न्यायोपार्जितानां प्रतारयितुमुपायान् चिन्तयन्नास्त। आढ्योऽपि सद्गुणसंयुक्तोऽपि सन् परान् विलोकितुं निरन्तरं यत्नमधात्। तस्य विभवः पराङ्कोटिमध्यास्त। अपरिच्छिन्नमैश्वर्यमस्मिन्नाधीयत। स स्वार्थघटकः परवित्तापहारी परेषां द्रव्यम् हस्तयितुम् गाढकैतवस्य चिन्तने व्यापृतोऽभूत्। कालक्रमेण च महतीं वित्तमात्रां क्रोडीकर्तुं स मनसि युक्तीप्रयुक्ती आलोडितुम् विचारयितुं प्रारेभे। इंडाजालकस्य तस्य मनस्येकः विचारः समुद्भूतः परार्दथापहरणाय येन सम्पदेन सरलचित्तेन मानुषेण सह सख्याजेन वर्तितुम् गृहान् निरगात् प्राप च जनार्दनाह्वयम् नरमेकम्। स जनार्दनः सरलचेता तस्मिन् विरूढमख्यः काश्यम् असन्दिहानः तस्मिन् पूर्ण व्यश्वसत्। वसुपतिस्तम् आचचक्षे 'रामपुरहिंदुजनोपकारशाश्वत निधौ एकः कोषरक्षकोऽपेक्ष्यते रु.१००) वेतनेन। त्वमद्यश्वो वृत्तिहीनो वर्तसे। तत्र तव नियुक्तिं कारयिष्यामि। परंतु कोषरक्षको रु.५०००) स्वामी भवेदिति तेषां नियमः यतस्तेषां निधेः सर्वः कोषः कोषरक्षकस्य हस्ते पतिष्यति। स कदाचिन्निधेः धनमपहृत्य पलायेदिति हेतोः'॥

जनार्दनः 'अस्ति मम शङ्करप्रहारसंनतसद्धनिधौ स्थायीधनरूपेण' इति तस्मै न्यवेदयत्।

वसुपतिः गतोऽभूत् चतुष्पञ्चदिवसोत्तरं पुनराविर्भूतः।

'एको दामोदराह्वयस्तव चिंतागदृस्थतां भूमि

रु.२००००) विनिमयेन क्रेतुमभिलषतीति वाचमुवाच जनार्दनस्तु आमियुक्त्या तं...मयमङ्गीचकार।

वसुपतिस्तस्मिन्नयद् ...ग्रामपुटोपशल्ये" दिवाकरः लिपिकस्य कार्यालयं लिपिज्ञेन च समाम.सादिचिह्नम् संविदापत्रमलेखयत् 'अमुकपुत्रोऽमुकनामाऽहम् इमां चित्तागढस्थितां भूमिम् या मया स्वश्रमेण अर्जितद्रव्येण क्रीतासीत् यस्याश्च न कस्यापि अंशः भागः वास्ति रु.-५०००) विनिमयेन दामोदराय विक्रेतुं निश्चयं करोमि। रु ५०००) मया अधुना प्राप्तम् शेषं पञ्चशतसहस्रम् क्रयलेख्यलेखनसमये प्राप्स्यामि इत्यादि ...

वसुपतिना चक्रदे भूमेः मूल्यं रु २००००) स्थाने क्रयलेख्ये रु. २५०००) दत्तम्. एवं स दामोदर इमां अन्यस्मै विक्रयणसमये अधिकं मूल्यम् लप्स्यते अधिकम् लाभञ्च प्राप्स्यति' ॥

जनार्दनः स्वहस्तपरिचिह्नितम् पत्रम् वसुपतये समर्पयामास। वसुपतिस्तद् गृहीत्वा नयनपथादतिक्रांतः।

वसुपतिस्तत्संवित्पत्रम् दामोदराय प्रेषयामास। न कालहरणस्य क्षमोऽयमर्थः। कालसङ्गः परिहार्यः इति सन्देशञ्च प्रापयामास।

दामोदरस्तु न्यायालयेऽभियोगं कृतवान् 'भो अहं कार्यार्थी। विचार्यतां मम व्यवहारः। एको जनार्दनो मत्तः पञ्चसहस्रम् रूप्यकाणि गृहीतवानस्ति भूमि विक्रयाय। तस्याम् भूमौ न तस्य बाधा निरपेक्षम् स्वामित्वम्। तस्य भ्रातापि अंशहरो तस्याम्। तस्य भ्राता स च न विभक्तौ स्तः। ग्रासाच्छादनवासानाम्

आच्छेदो तयोः न भूतः। पृथगायव्ययधनौ न तौ। विनाशेवेतरश्चापि न भवितुमर्हति। सोऽपि च ऋणिकः भ्रात्रा सह। अस्य देशस्य विरचितविधानानुसारं स भ्रातुः स्वामित्वम् बाधित्वा न स जनार्दनः इमां भूमिं विक्रेतुम् पारयति। अतः मम पञ्चसहस्रं रूप्यकाणि स मह्यम् प्रतिदद्यात्' ॥

एवम् व्यवहाराधीतिम् विभिन्नवृत्तिमनुपाश्रित्य जीविकां कुर्वतम् प्रसादश्चास्मिन् कार्ये नियुक्तवान्।

वसुपतिस्तद्दिनादारभ्य प्राड्विवाकस्य गृहम् गतागतङ्कर्तुम् प्रारब्धः। तस्मिंश्च सख्यीयति स्म। आधिकरणिकस्तु उद्धतनृत्यगीतरसिको वारिणीनां विलासप्रियः सततं धनकामुकः उज्ज्वलवेषधारी च। स तं पर्यचिनोत् मित्रञ्चाकरोत्। परिचयस्तयोरनुदिनम् वृद्धिङ्गतः। दृढाद् दृढतरो बभूव तयोः स्नेहबन्धः ॥

एकस्मिन् दिने वसुपतिः भार्यया सह स्वर्गसौख्यमनुभवन्निव उपविष्टः।

'किमिदानीं सञ्जातम् यत्त्वम् एवमभूतपूर्वेकमलप्रफुल्ललोचनो दृश्यसे'? इति सा अप्राक्षीत्तस्य बाहुं कूर्चे नेपथ्यसञ्चालयन्ती।

'जातो मेऽद्य हार्दः परितोषः। तमहं राज्ञः यस्मिन् ममार्थी जनार्दनविषयको लम्बो संस्तुतश्च विधाय अद्याहम् तस्य गृहङ्गत्वा रु ५००) मुद्राङ्कितम् पत्रपुञ्जम् तस्य हस्ते समर्पितवान्। पत्रपुञ्जं हस्ते आयात एव आनन्दाश्रुवर्षा तस्य नयनाभ्याम् पत्रपुञ्जोपरि पतिता। मम च हृदयम् भाग्योदयाशीलतया प्रमोदमेदुरं बभूव यथा वर्षाबिन्दुषु धरातले पतितेषु कुन्दकोरको

मुदितोतरङ्गः जायते। प्रथमं तु धनमुद्रापत्राणां स्वहस्ताद् गतत्वाद् ममाक्षिणी शोकाम्बुसिक्तेऽजायेताम्, किंतु पश्चादुत्कोचप्रदानेन तस्यानन्दाश्रुपूरप्रवाहम् दृष्ट्वा दृढाशांकुरो मे चेतसि समारुहत्। अहञ्जातप्रत्ययोऽभूवम्। शोकवारिदिद्रवश्च हर्षविद्रवो बभूवुः यथा अम्बुवाहा जगदन्धकारे निमज्जयन्तः सुखस्पर्शानिलागमेन वर्षाधाराः मुञ्चन्तः जगदानन्दकारणम् भवंति॥

जनार्दनस्तु अभियोगवृत्तांतं विज्ञाय भृशं विसिस्मिये कपटस्यास्य सञ्जातप्रत्ययोऽभूत्। यदादितो विलक्षणं प्रत्यभात्तस्य तदिदानीं सर्वमेव स्फुटमभूत्। असह्यानुतापाग्निना भस्मीक्रियमाणमभूत्तस्य हृदयम्। अत्यर्थम् दूनमनस्को बभूव सः। हृदयपरिमाथिनी रुजा आविरासीत्तस्य॥

एतदर्थमेव स महाम् कोपरक्षकस्य नियुक्तिं ददाति स्म। मम धनस्य स्थितं लब्ध्वा तदपहर्तुम्। अधिकरणे सत्यानृतयोः विवेको भविष्यति। आगमयितव्यं मया। अभियोगमुद्धरामि तावत्। तस्य पदोऽधरी भविष्यत्येव॥

दामोदरः आधिकरणिकसमक्षे सादयमवदत्
अयञ्जनार्दनः पञ्च सहस्रम् मे धारयति। न स्पृहते दातुम्। अपजानीते। छलितोऽस्मि अनेन॥

जनार्दनः 'अनेन अलीकम् व्यवहृतम्। छद्म समाचरितम्। अनृतं अयं व्याहरति। वितथम् ब्रवीति एषः नाहमस्य किमपि धारये। कुत्र त्वया धनं दत्तम्?'

दामोदरः 'लिपिज्ञस्य गृहे दत्तं यत्र संविदपत्रम् लिखितं तेन तरोरधः उपाविष्टेन।

'कुत्र तद् गृहम्'?

'रामपुरोपशल्ये एकस्यां वीथ्याम्'।

'कति कोष्ठाः तस्मिन् गृहे'?

'चत्वारः कोष्ठाः सँति'।

'भूमिक्रयाय त्वया रु. २००००) दातव्यमासीत्। कुत्रास्ति तव संनिधौ विंशति सहस्रं रूप्यकाणाम्'?

दामोदरो मौनमाकलयत्।

जनार्दन एकमन्यजनं पृथुदत्तम् 'साक्ष्यदानाय समाह्वयत्।

पृथुदत्तः साक्ष्यमब्रवीत्।

जनार्दनः 'जानासि त्वम् दिवाकरलिपिज्ञस्य कार्यालयम्'?

पृथुदत्तः 'आम्'।

जनार्दनः 'क्वास्ति तत्'?

पृथुदत्तः 'रामपुरोपशल्ये'।

जनार्दनः 'कियँतः कोष्ठाः सँति तस्मिन्'?

पृथुदत्तः 'एक एवागारः'।

जनार्दनः 'कियँतः द्रुमास्तस्मिन् कोष्ठे'?

पृथुदत्तः 'द्रुमस्तु न विद्यते'।

जनार्दनः 'कुत्र दिवाकरलिपिज्ञस्य निवासस्थानम्'?

पृथुदत्तः 'निवासगृहम् तु कृष्णनगरे वर्तते'।

जनार्दनस्तु प्राड्विवाकम् सम्बोध्य प्राह 'अयम् दामोदरस्तु विप्रलम्भकः। अनेनेयम् वञ्चना परिकल्पिता वसुपतिद्वारा। न स स्वयमायातः। नानेन किमपि दत्तं मह्यम्। स तत्स्थानमपि न जानाति यत्र पत्रम् लिखितम्। नास्ति अस्य सविधे रु २००००)

भूमिमूल्यप्रदानाय। अयं वञ्चनकारी परद्रव्यापहरणे निपुणतरो मां वञ्चयते। मामतिसंधातुमनेन इदं कूटजालम् विरचितम्' ॥

उदारनेपथ्यभृता उत्कोचजीविना धर्माधिकारिणा स्वनिर्णये सर्वमिदमित्थम् स्पष्टीकृतम् :—

जानन्त्येव हि सर्वे यन्महाशोकव्यतिकरेण कियन्तो जना उन्मत्ता जायंते उन्मत्तवच्चेष्टंते। अन्येषां केषांचित् शोकार्णवे निमग्नानां नराणां स्मृतिनाशः जायते। अयम् कृपणः दामोदरः पञ्च सहस्राणां रूप्यकाणाम् नाशनवाभिषंगेन तिरोहितस्मृतिरः जायत। महाशोकग्रस्तस्यास्य सर्वम् स्मृतिपटलात् प्रमृष्टम्। सर्वं भूतपूर्वं वृत्तं तस्य स्मृतिसरण्योः सम्मार्जितमभूत्। न तत्तस्य स्मृतिसरण्यां संसरति नास्ति अत्र किमपि आश्चर्यम्। अस्य व्यवहितास्मृतिः तु अस्यै पञ्चसहस्ररूप्यकाणां हानेः दृढतरं प्रमाणम्।

यत्तस्य मंजूषे विंशतिसहस्रं रूप्यकाणां नास्ति, अयं स्मृतिभङ्ग एव तस्यापि कारणम्। नष्टस्मृतित्वाद् अधुना तस्य स्मृतिपथमेव नारोहति यत् कुत्र तेन स्व धनं निहितम्। सर्वं स्मृतिपथाद् गलितम्। अतो जनार्दनो दामोदराय पञ्च सहस्रं रूप्यकाणां धारयते एतस्माद् हेतोः जनार्दनो दामोदराय रु. ५०००) दत्वा आत्मानं ऋणान्मोचयितुमर्हति। जनार्दनेन अवश्यमेव तद् ऋणमपनेयम् ॥

जनार्दनस्तु अधरीभूतः। पूर्ववादिना जितम्।

वसुपतिस्तस्य पञ्चसहस्रस्य अंशहरः आसीत्। चतुःसहस्रं तेन प्राप्तम् सहस्रञ्च दामोदराय दत्तम् ॥

वसुरतेः धनतर्षः न व्यरमत्। अजस्रं तस्य मनसो

रुचिः धनसंग्रहेऽवर्धत । गत्वा स एकस्य साधोः सकाशम् ऋणम् कृतवान्। स धनमपेक्षत इति हेतोः न प्रत्युत दुःखैरर्जितां परेषां श्रियम् स्वायत्तीकर्तुम् आत्तस्वतया च स्व कोषं वर्धयितुम् । केनचिद्वेङ्कट-रामेण पञ्चकशतवृद्ध्या द्विसहस्रं रूप्यकमुद्राः तस्मै दत्ताः । वसुपतिः स्वहस्ताङ्कितम् उद्धारपत्रं तस्मै दत्तवान्। ततः परं उत्तमर्णः कतिचिद्वारान् अधमर्णं वृद्धिसहितस्य ऋणस्य अपाकरणाय अभ्यर्थितवान् । परंतु ऋणिकेन वसुपतिना न तु मूलं शोधितं न वा वृद्धिः दत्ता। तदा उत्तमर्णेन वृद्धिः मूले निवेशिता। तदा उत्तमर्णेन वेङ्कटरामेण रु. २२१३) द्विसंवत्सरं यावद् निर्जितवृद्धिसहितस्य मूलधनस्य प्राप्तये धर्माधिकरणेऽभियोगः कृतः। न स वसुपतिर्मां प्रति आत्मानमनृणीकृतवान् इति च आख्यातवान् । आनृण्यञ्चायाचत ॥

नियते तिथौ वेङ्कटरामो वसुपतिश्च न्यायालये आस्ताम्। अनेन वसुपतिना रु. २०००) आदाय इदम् ऋणलेख्यम् मह्यम् दत्तमित्यवोचद् वेङ्कटरामः । आधिकरणिकेन पृष्टो वसुपतिः मयैव इदं ऋणलेख्यं लिखितमिति उदतरयत् ॥

आगामिनि तिथौ निर्णयो दास्यते मयेत्याज्ञापयामास आधिकरणिकः।

आगामिनि तिथौ वेङ्कटरामो न्यायालयं न जगाम। तस्योपस्थितिः आवश्यकी नासीत्। तस्य विधिज्ञस्तत्र आसीत्। ऋणलेख्यं दृष्ट्वा व्यवहारविषयस्य निर्णयो यथातथङ्कर्तुं पार्यते। अर्थिप्रत्यर्थिप्रतिनिधी तत्रास्ताम् धर्माधिकरणिकोऽपृच्छत् कुत्र स अग्रवादी? का

च तस्य पीड़ा ?

वेङ्कटरामस्य व्यवहारविदुषा त्र 'अभियोक्ता तु न आयात:'।

प्राड्विवाकोऽत्रोवत् 'प्रतिवादी क्व'?

'अयमस्मि भगवन्' वसुपतिरात्मानँ प्रस्तुतवान्।

अक्षदर्शकोऽब्रवीत् 'प्रतिवादी उपस्थित:। वादी लुप्तो। मम तु अस्मिन् विषये संदिग्धः जायते यद् प्रतिवादी पूर्ववादिने किमपि धारयति। प्रत्युत वादी एव प्रतिवादिने किमपि धारयति। तस्यानृण्यँ न गतः स्यात्। अयँ तु सर्वेषां जीवानाँ विदितमेव यद् यः कश्चिद् ऋणी भवति स तस्माद् बिभेति। ऋणी साधोः नयनविषयताम् परिहरति। यदि पथि वा क्वचिद् वा तँ आगच्छँतँ पश्यति तदा स्तम्भांतरितो भूत्वा अदृश्यताम् याति। यदि कस्मिन् गृहे स्थितो तँ आयांतं न्निरीक्षते तदा तिरस्करिणीप्रतिच्छन्नोऽदृश्यो भवति। तस्मिन् दृष्टेऽन्तर्हितो भवति द्रुमेण तिरोहितोकृतोऽदृश्यो भवति। तस्य दृष्टिपथे पतितः प्रच्छन्नो भवति। अतो मम तु एवं प्रतीयते यद् वेङ्कटरामेण प्रथमनिधेरन्तरं वसुपतेः किमपि हृतँ स्याद् यन्नासौ अत्रायातः। स एव हीनः। स पराजितः॥

वसुपतिः गृहमागत्य भार्यां वसुमतीं व्याजहार जितो मया व्यवहारः। न लोमापि मेऽमीयत। न मे स्वार्थभ्रंशो जातः! ऋणनिर्मोक्षो न कृतः। द्विसहस्रम् रूप्यकाणाँ परस्य मम आमिषताङ्गतम्। कामो फलितो मे। सापत्नेयँ तस्यापहृतम्। विप्रियँ तस्य आचरितँ वेङ्कटरामस्य! कथँ न्यायाध्यक्षः एवमतिमात्रँ मयि स्निह्यति? कथमेवमाधिकरणिकोऽन्तवृत्त्या

मया संयुक्तः। अहम् तु तावद् उपदानेन सह तस्य गृहङ्गन्तुम् तस्य चाटुम् प्रकर्तुं सानुनयवचनैश्च तं वशे आनेतुम् मनोऽकरवम् परंतु मम तत्र गमनात् पूर्वमेव तेन मत्पक्षे निर्णयो दत्तः। मयि पक्षपातो विहितः। अहमुपदामपि तस्मिन् न व्यतरम्। ततः प्राणेव कार्यसिद्धिर्जाता। इदं तु कर्माश्चर्यं संवृत्तम् तेन तु मम चित्तानुवर्तित्वम् स्वयमेव प्राकाशि। कथं स मम छन्दानुवर्ती भूतः एतादृक्सौभ्रात्रं तेन प्रदर्शितं इति ज्ञातुम् कुतुकी मम चेतः ! विना कालहरणं स्व कृतज्ञताप्रकाशनाय तस्य गृहम् संसाधयामि ॥

वसुपतिर्नागेश्वरनाम्नो तस्य न्यायाध्यक्षस्य गृहम् गतः। गृहं तदा संवृत मासीत्। तस्याह्वाने द्वारं मुक्तं गृहश्चापावृतम्। अंतर्गतो वसुपतिः संचष्टे—

बह्वहम् भवते धारयामीति कृतवेदितया ब्रवीमि। कथं नु भवान् मयि एवं मिद्यते। कथं भवान् एवं प्रीतिमापन्नः। अहम् तु तावदत्रागमनकालमेव प्रत्यक्षत। भवता तु ततः पूर्वमेव मत्पक्षसाधको निर्णयो कृतः! कथमेवं भवान् मामनुग्रहीत् मदर्थितः च पूरिता?

उपचारवत्मनि समासीनो प्राड्विवाकस्तत्क्षण एव उपजातपरिचयो गुह्यभाषणङ्कतुं रहःप्रदेशमानीय प्रीत्युपचयचतुराभिर्वाग्भिः प्रतिवक्तुं प्रचक्रमे

भवांस्तु मम मतानुयायी। सर्वे मुसलिम क्रिश्चनादयो स्व स्व मतानुवर्तिजनानां साहाय्यमाचरंति। अतोऽहमपि भवतः साहाय्यमाचरम्। भवान् अस्य नगरस्य प्रख्याततमो व्यक्तिः। भवतो विचाराः सर्वैः पौरजनानां विदिता एव। ममापि ते सुष्ठु विदिताः।

भवान् चार्वाकमतानुयायी । अहमपि चार्वाकमते स्थितः —

यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनम् कुतः ॥

अस्माभिः सुखं जिजीविषुभिः न कस्यापि धर्मनियमस्य आचारस्य वा अपेक्षा क्रियते । न कोऽपि नियमो आचारो वा अस्मान् संग्रहीतुं शक्तः । सुखनिर्वहणम् स्वार्थसंसाधनमेव अस्माकमेकं प्रयोजनम् । मातः पिता मित्र सुहृत् कस्यापि कृते वयं किमपि न कुर्मः । अस्माकं सर्वाः चेष्टाः स्व सुखसम्पादनायैव भवंति । भवान् व्यतिरिक्तो मच्छरीरात् मन्निर्विशेषो भवान् द्वितीयमिव जीवितं मम । अद्यप्रभृति आवयोः सख्यमस्तु । आवाञ्च मैत्रीं आपादयावः । मैत्रीं विधाय च सुखम् निवत्स्यावः ॥

निर्धनमनाभाष्यम् मन्यन्ते लोकाः । निर्धनो हत जीवितः । निर्धनः प्रतिकूलदैवः पुरुषः । यस्य धनम् अपोढम् स लुप्तहर्षो जायते । निर्धनः स्थिरदुःखभाक् । निर्धनस्य जीवितं यातनामयम् । न भवेत् कोऽपि निर्धनः । धनमेव सुखानां मूलम् इति वसुपतेः सिद्धांतः

वसुपतिः यंत्रवाहनेन त्वरितगत्या पङ्किले मार्गे याति स्म । मार्गे गच्छन् कश्चित् पथिकः तस्य यानेन उत्क्षिप्तेन पङ्केन पङ्ककलङ्कितोऽजायत । स च वसुपतौ भृशम् विमना बभूव । अंतर्गतबाष्पकण्ठः स वसुपतिं परुषम् जगर्हे । कण्ठस्तम्भितश्च स परुषाभिः वाग्भिः वसुपतिं संततम् अतर्जयच्च । कर्कशम् इदम् ऊचे तम् त्वरितम् त्वयेदम् दुरितम् अनुशोच्यम् । अहञ्च क्षमां याचय । नोचेद् महतोऽवज्ञाम् प्राप्स्यसि । अहञ्च

न्यायालये आवेदनम् करिष्यामीत्युक्त्वा कथञ्चिद् व्यवस्थापितवाक् बभूव ॥

वसुपतिस्तु न किमपि अनुतापम् भेजे । कृतम् नान्वशोचत । अहमेतेन अनुशये इति वा न समग्रशीत् । कोपविलोहिताक्षोऽभूत् । आत्मनो स्खलितम् नाशोचीत् न च पश्चादतप्यत । क्रोधान्धोऽजनि जातः । तस्य नयनयोररुणिमा ववृधे । सुतरां संदिदीपेऽस्य क्रोधः । स तु अवद्याद्रूनचेतस्को नगरपालम् तम् पथिकम् दत्तात्रेयनामानम् कारायां निक्षेपणाय सप्रश्रयम् प्रार्थयत । नगरपालस्तस्य सुपरिचितः सुहृत् दत्तात्रेयम् मिथ्यापराधेन अभ्यशँसद् धरेण चान्यच्चिपत् कूटसाक्षिणः चकार प्रतिपक्षादयदानाय तमभियुज्य दण्डाधिकारिणः समक्षम् नीतवान् । दँडप्रणेता उष्णीषमनोहरः परमशिवनामा अविदित पक्षपातो दत्तात्रेयस्य अनागस्वितां सम्यक् प्रतिपद्य विरुद्धसादयवचनैः अप्रत्ययितः तञ्च अनेनसम् मत्वा कारानिरोधाद् विमोचयामास । आगत्य गृहीतः स दत्तात्रेयः चतुरः मासान् चारके संयतोऽभूत् । तस्य स्वातंन्त्र्यस्य समुत्सादो जातः चतुरो मासान् यावत् कारागृहे आसिद्धस्य तस्य वृत्तिनाशः समजनि । न काकणिकापि उपार्जिता तेन चतुरो मासान् यावत् । चतुरो मासान् स आसेधम् प्राप्तः । एतावति काले तस्य पुस्तकविक्रयापणे स्थितानि पुस्तकानि कृमिकीटमत्कुणादिमलमूत्रदिग्धानि अजायन्त न तानि विक्रययोग्यानि । इदानीं । तस्य गृहे चत्वारिंशत् कुक्कुट्यः आसन् ता अपि कुत्र विलयङ्गताः कोऽपि नाजानात् । तस्य वसुपतिना सह द्वैधमुत्पन्नम् ।

आसेध—स्मै अतिवेलम् कष्टदः समजनि ॥

स च दत्त,बंधे नगरपालन् (वसुपतश्च रु २०००) आत्मनिष्क्रयार्थमभियुयुजे । न्यायाध्यक्षश्च कश्चित्शिरसात्वेष्टनशोभी कलत्रसुभगवेषो नागनाथः

नागनाथो गृहस्य द्वारं रुद्ध्वा श्यामधराख्यं भार्यया मीनाक्ष्या सह वार्तालापम् कुर्वन्नास्त —

अस्ति ममाधिकरणे एको व्यवहारपदो निश्चयः। कश्चिद्दत्तात्रेयः एकम् नगरपालम् एकञ्च श्रेष्ठिनम् अभियुक्तवानस्ति आत्मनिर्मोचनमूल्यप्राप्तये। नगरपालस्तम् दत्तात्रेयञ्चतुरो मासान् कारयामासेधयत् तद् दुरितोपहाराय तेन नगरपालेन श्रेष्ठिवसुपतिना च मह्यम् द्विसहस्रम् रूप्यकाः देयाः इति तस्याभियोगः। अस्मिन्नभियोगे मम कृत्यमापतितम्। किमत्र करणीयमिति न निश्चेतुं शक्नोमीत्यभाषत नागनाथः।

त्वया तु राष्ट्रस्य न्यायव्यवस्थानुसारेणैव वर्तितव्यम्। त्वया तु सर्वस्मै क्रियानुरूपफलदानार्थमेव यतितव्यम्। न त्वयि पक्षपातगंधः कदापि दृश्येत। न त्वम् पक्षपातदोषेण कथमपि युज्येः। न त्वया किमपि कार्यं येन तव न्यायविरहो व्यज्येत। विध गँ हि सर्वं सर्वेषु वर्तते। नादः पुरुषविशेषमाद्रियते अपि कोऽपि नगरपालो राष्ट्रपतिर्वा किं न भवेदिति प्रत्यूचे मीनाक्षी ॥

'अस्मिन् कृत्ये ऽहमनौचित्यसङ्कटे पतितोऽस्मि। किंकर्तव्यताप्रमूढचेतनो च जातः' उवाच नागनाथः।

अन्यायसेवितः पँथाः न त्वया आचरणीयः। न्यायव्यवस्थामन्यथयितुम् किमपि न करणीयम्। यावद् द्योश्मेदिन्योरत्ययो न भविष्यति तावद्व्यवस्थायाः एका

माता एको विदुषी नैवात्यर्थ्यतीति ते सङ्कल्पो भवतु। एवमेव लोकान् अपराधविधानाद् रोद्धुम् पार्थते। त्वम् न्यायपथप्रच्युतो मा भूः। तव न्यायो न परिहीयेत इति प्रोवाच दृढनिश्चयेन मीनाम्बा ॥

'अस्मिन् विषयेऽहम् आत्मरक्षाकर्तव्यमध्यवर्ती स्थितोऽस्मि। इमे नगरपालाः दारुणाः तैः सह विरोधोत्पादनस्य बुद्धिः भयावहा। तैः वैमनस्यम् भीतजनकम्। एकदा एवँविधो व्यतिकरो बभूव येन तदाप्रभृति अहम् आत्मजीवितनिर्दिष्टेन शपथेन तैः सह विरोधपरिहारं निरचिनवम्।

एकदा मम भुजिष्यो मम प्रस्तावभाजनँ चिकित्सक परीक्षणाय नयति स्म। तस्य पश्चादागच्छन् एको नगरपालस्तमाहूतवान्। 'मां शङ्कयति नगरपालः' इति ज्ञात्वा भयकँपितप्रैष्यस्य हस्तात् स्रस्तः काच कुतुपो भुवि पतितो भग्नश्च जातः। न जाने किं भवेद् इति प्रवेपमानगात्रः भुजिष्यः पलायितुमारब्धः। अग्र गच्छद्भिः पाँथैरवरुद्धः नगरपाले समर्पितः। नगरपालश्च तँ किंकरं सुरां नीत्वा गच्छतीति दोषेण अभियुज्य पथिकाँश्च साक्षिणो विधाय व्यवहारमडपे षण्मासँ निष्ठुरं कारानिरोधमकारयत्। देशविधानँ सुरापानँ निषेधति ॥

किं स भुजिष्यो बधिरमूको आसीत्। किं न निवेदितँ तेन नगरपालाय यदस्मिन् काचकुतुपे मूत्रमासीद् न तु सुरा' सकौतुकमपृच्छद् मीनाम्बा ॥

कथितँ तेन सर्वं तस्मै। नगरपालोऽब्रवीद्यद्येवम् तर्हि वयँ तत्र गत्वा काचकुतुपद्रवमिश्रितमृत्तिकां वैद्यस्य परीक्षणाय प्रेषयिष्यामः भुजिष्यश्च तत्रानयद्

यत्र क्रतुपो भग्नो जातः । परंतु मूत्रमिश्रितकर्दमो गतागतं कुर्वताम् पंथानाम् उपानद्भिः संलग्नः कुत्र २ गतः किमपि न जाने । अतः सुरैवासीदस्य हस्ते अतः एवायम् पलायितः इति निश्चिकाय नगरपालः । साक्षिणोऽपि एवमेव निश्चिक्युः इत्यावेदयद् नागनाथः ॥

त्वम् न सूचितोऽस्मिन् विषये ? त्वङ्कथम् न तस्य प्रत्ययनँतरीभूतः ? पुनरप्राक्षीज्झीनाम्ना सोपालँभम् ।

मयाऽपि तस्य वृत्तोपलब्धि कृता । परंतु यद्यहम् तस्य साहाय्यमकरिष्यम् तर्हि अहमपि तेन सह अभियुक्तोऽभविष्यम् ; मयैव सा सुरा प्रेषिता अभवदिति कृत्वा अहमपि कारायां निक्षिप्तो ऽभविष्यम् । अतोऽहम् निश्चेष्टो भूत्वा मौनी समभवम् इत्युदतरयद् नागनाथः ॥

नागनाथेन दत्तात्रेयस्य व्यवहारनिर्णयपत्रे इत्थम् अलेखि –

'लक्ष्मी चला चपला चञ्चला । इत्वर्यः इव गत्वर्यः सम्पदः कस्यापि गृहे स्थिराः न तिष्ठंति । यदि दत्तात्रेयस्य द्विसहस्ररूप्यकाणां हानिरजायत तत् किं आश्चर्यम् । हानिस्तु भवितव्य । लक्ष्मीविनाशोऽपरिहार्यो । अलँ तस्य शोचनेन । यद्भवितव्यमेवासीत्तस्य दोषो नगरपालोपर्यारोपयितुँ न युक्तः । नगरपालो वसुपतिर्वा न तत्र कारणम् । कारणँ तु भवितव्यतैव' ॥

दत्तात्रेयस्याभियोगो निष्फलीभूतः ॥

उत्तरोत्तरं वृद्धिमाप्नुवानः सफलताञ्च लभमानः वसुपतिः न विरराम दूषिताचरणात् । प्रत्यहञ्च नूतनान् उपायान् आचरति स स्व कोशवृद्धये । तस्य

कलुषितहृदये कद्रलिताः तस्याशाः देशस्य अनर्थकर्यां दशायां प्रकामम् फलम् भेजिरे । प्रत्येकमवस्थानां अनुरूपम् न्यायम् उपपाद्य अनुकूलं चान् साफल्यम् लेभे । प्रलोभनम् वैनशोधनभावना भरम् च उभे दुवलसङ्कुलम् पुमांसङ्क्षोभयितुमीष्टे न्यायभ्रष्टपथाद् विचालयितुम् च । तस्य जिहामनेः लोभानुवृत्तिनम् नृशंसं साफल्यलाभादर्थसञ्चये कलितनिश्चयाय तस्मै उत्तोपमावहत् । सुचिरसम्भृतं तस्य हृदयकालुष्यं निरंतरमुपचीयमानमासीत् । न्यायाध्यक्षान् च पक्षपातग्रहणे प्रलोभयामास । तेषाञ्च धियं धूनयति स्म । मानसञ्च अशांतयति स्म । स पटुमतिः नवीनानुपायान् एतेषां धनं हस्तगतं कर्तुं अन्तिष्ठत स्म । स कालतंत्रज्ञो विरचितन्याटुवचनरचनः सर्वदा विदिताभियोगोऽवसरानुरूपमुपायं सर्वत्रालभत ॥

सुन्दरराघवाभिधं सरलांतःकरणमेकम् श्रेष्ठिन वसुपतिः अभियुक्तवान् पञ्चशतरूप्यकप्राप्तये । अभियोगश्चेत्थम् । अहमेतस्मिन् सुन्दरराघवे पञ्चाशत् दशरूप्याङ्कनमुद्राः समर्पितवान् एकस्य दूरान्वीक्षण यंत्रक्रयाय । स तु आत्मानम् एवम्प्रकारकयंत्रव्यापारी प्रदर्शयामास । यंत्रं तु नानीतं तेन मम धनञ्चापि न मयि प्रत्यर्पितम् ॥

मृषाभियायिसाक्षिमान् अभियोगो तेन कृतः ॥

सुन्दरराघवो महतीं चिंता जगाह । कथमयम् उपजापः कृतमनेन । असदृशाङ्कर्मानुष्ठितं अनेन । तस्य मनो गुर्वीं चिंतामापेदे । कृच्छ्रेण अंतर्भेदजर्जरम् हृदयम् संस्तभ्य दुर्जनसमये आत्मानं संधारयितुम् अभियोगञ्चाभ्युद्धर्तुं मतिं व्यधत्त । । वसुपतिस्तु

कपटविद्यायां अनितरसाधारणं नैपुण्यम् व्यधत्त। स सहृदयं मार्गान् एकं मित्रं शङ्करलिङ्गनामानं मिथ्याभिधायकं साक्षिणमुद्योजयामास। तस्मिन् च कृत्यम् समावेश्य निर्विशङ्केन चेतसा भ्रमति स्म। अभियोगविचारावसरे सुद्दरराघवस्य प्रतिनिधिः व्यवहारज्ञः तं शङ्करलिङ्गम् साकूतं इत्थमभिहितवान् –

'न मे ते शपथैः प्रत्ययः। त्वं तु नगरांतरे विलासपुरे कृषिविभागकार्यालये नियोगम् प्राप्तोऽसि। यस्याम् तिथौ अभियोगे पञ्चाशत् दशरूप्यकमुद्राः दत्ता अभिधीयते त्वम् तदा तस्मिन् कार्यालये स्व कार्यपर्यवेक्षणम् कुर्वन् आस्थाः तत्र च तत्रोपस्थितिः तेषां पुस्तके निवेशिता'।

शङ्करलिङ्गः तूष्णीमस्थात्।

व्यवहारविदब्रवीत् 'इदानीं साधय'।

शङ्करलिङ्गो न्यग्भूतो निरगात्।

परंतु प्राड्विवाकेन निर्णयो वसुगतिपक्षे कृतः। निर्णये तु इत्थम् संनिविष्टमासीत् –

अयम् शङ्करलिङ्गो मद्रपुरविश्वविद्यालयाद् इतिहासे भूयसोऽङ्कान् लब्ध्वा एम. ए. परीक्षामुदतरत्। इतिहासनैपुण्येन अन्यान् अधरयति अत एव एम. ए उपाधिर्दत्ता विश्वविद्यालयेन। स तु दूरदूरदेशेषु गतेषु शत वत्सरवर्षेषु भवानाम् वार्त्तामितिहासं जानाति। इयम् तु कतिचिद् दिनेभ्यः प्रागेव व्यतीता वार्त्ता। साऽपि निकटवर्तिग्रामांतरे। अतोऽस्य वचः प्रमाणकोटिमाटीकते। इतिहासज्ञानाम् वचनानि प्रमाणरूपेण यत्र तत्र उद्ध्रियंते। यदि वयम् तस्य साक्ष्यम् न प्रतीमः वयम् विश्वविद्यालयस्य अवज्ञाम्

वितनुमः । विश्व विद्य लयश्च असभ्यङ्कोपिष्यति ॥

सुद्ररराघवस्य हस्ताद् धनमपासरत् । वसुपतिस्तु श्रीमान् संवृत्तः आनन्दं वितेने । सुद्रर राघवो निराशीभूतो गृहङ्गतः ॥

वसुपतिः ब्रह्मलिङ्गस्वामीति नाम दधतस्तस्य प्राड्विवाकस्य आप्तीयः । तस्य गृहान्नातिदूरे वसति स्म । तस्य गृहङ्गतः । अर्गलीकृतम् द्वारमाहत्य अंतः प्रवेशम् लब्धवान् । प्रदर्शितसमुदाचारः स मधुगर्भितगिरा प्राड्विवाकमपृच्छत् ।

'किं तस्याभियोगस्य परिणतिः भूता' ?

प्राड्विवाकः संग्रथितहस्तस्तस्य मधुगिरा प्रसन्नः मन्दस्मितेन तम् बभाषे –

'युष्माकम् पत्र एव मया तोषितः । मया तदा इत्थं सुविचारितम् यदसौ वसुपतिर्मन्निवासस्य उपकण्ठे एव निवसति । अतो ममायम् धर्मः तस्मै तोषतुष्टिदानम् । कर्पूरोऽपि निश्चेतनोऽपि सन् आत्मानम् विलोप्यापि समीपस्थितेभ्यो लोकेभ्यः सुगंधम् ददाति । वयं तु चेतनाः । अपरञ्च ममात्र किं हीयते' ॥

एवं शनैः २ एतेषां न्यायाध्यक्षाणां कलुषा प्रवृत्तिः कर्णाकर्णिकतया सर्वत्र प्रासरत् । पौरेषु तेषां श्रवणः गर्हितो व्यापारो बहुलीभूतः । ते न्यायव्यवहारेषु औदासीन्येन वर्तितुम् न समर्थाः । तेऽत्यधिकम् उन्मर्यादाः जाताः । नाटस्थो न संशयच्छेद्यान् व्यवहारान् निर्णेतुम् संशयञ्च निश्चयसात् कर्तुं न ते शक्नुवंति । यः कश्चित् तेषामनुनयपरो भवति सानुनयैः वचनैः तान् प्रीणयति तस्य कृतेऽन्यायं समाचरंति न्यायादपेताम् निर्णयञ्च ददति । गुप्तरूपेण धनं

आदाय अन्यायँ विदधते। पक्षपातेन अन्यायँ समनुतिष्ठंति। तेषाँ पातकान परिच्छेदमत्यायन्। तेषाम् दुष्कर्मणां उपाख्यानम् न पूर्तिमेतुम् शक्नोति। तेषु समुपैति पक्षपातः। आनन्दश्च कुर्वंति। यापितत्रपास्ति न प्रतिकूलाचरितँ कस्य दँडयँति। विधानमननुविधाय इन्द्रियतर्पणमेव मानवजन्मप्रयोजनम् तं मन्यते। लोकास्तेभ्यः न्यायप्रापणे आस्थापराङ्मुखा जाताः। तेषु शिथिलादराः संवृत्ताः। बहुतिथः कालः परिवाहितस्तेषामन्यायाचारदर्शने लोकैः। ते तु धर्मस्थितान् दयशेन् अन्तिमलोहितबिन्दुपर्यंतम् संशोषँ २ सँपेषम् २ जीवँति। तेषाम् दुरात्मनाम् अत्याचारम् सोढ़म् लोकैः। तस्योऽयङ्कलङ्कः उत्थितः देशस्य यशो मलिनयति अत एव परिमार्जनीयोऽयमस्यापनोदः कर्तव्यः देशव्यवस्था यथानुरूपम् स्थापनीयेति मनसि कृत्वा लोकास्तेषामन्यायव्यवहारान् अधिकृतेभ्यः सुष्ठु उपावर्णयन् तेषु पक्षपाताद्दोषम् समारोपितवँतः। अन्यायमवसितमिच्छामः इति च प्रार्थयँत।

अधिकृताश्च तेषाङ्कश्मलाम् वदँतीन् श्रुत्वा अन्यायप्रतिरुरुत्सया अन्यायवृत्तिरवसानमभ्यन्तरवन्। अवस्थितेः भयङ्करत्वाद् न वयम् उदासितुमर्हामः। अस्माकमत्र प्रष्टव्यता समस्ति। अस्माकम् पर्यनुयोज्यतास्ति। पौनःपुन्येन अस्माभिराकर्णि तेषां पापाचार इति मिथः कथितवँतः। तेषाम् नरेन्द्रनाथनागनाथनागेश्वरादिप्राड्विवाकानाह्वानमभिप्रयँतो विलंबेन अधिकमनिष्टं प्रसंदयत इति च ज्ञात्वा लोकान्न्याय विधिपरिहारं अद्धापितवँतः तेषु धर्माधिकरणे कृतकस्कः उदर्कः कस्यचित्कर्मणो भविष्यतीति च द्रष्टुम्

एकम् स्थेयमकार्षुः। अनुसंधानं न क्रियते इति च तमाज्ञापितवंतः अनेनानुसंधानेन अन्यायः समूलमुत्खातो भविष्यति विपथगामिनश्च नियमविरुद्धं असत्सरणिं परित्यक्ष्यंति पापेभ्यो विनिवर्त्स्यंति चारित्र्यञ्च तेषां परिष्कृतं भविष्यतीत्यप्रतिसमाधेयम् विश्वासमात्मनो प्रकाशितवंतः॥

स स्थेयो वस्तुपातमपि तस्मिन्नेव नगरे आकारयत् अनुसंधानञ्च प्रारब्धवान्।

सदसद्विवेकनिपुणः स स्थेयोऽस्मिन् विषयेऽध्यक्षा चितैः तैः कृतानां निर्णयाणां परीक्षां विधाय विचारपरः स्थित्वा तेषु प्राड्विवाकेषु सावधानमतिः तथ्यं एतं प्राप। 'एतैः प्राड्विवाकैः कया भावनया भयेन वा प्रणयेन वा लोभेन वा वैरेण वा कः निर्णयो दत्तः इति न प्रसाधयितुम् शक्यम्। हृदि स्थिता भावना न प्रमाणयितुम् शक्या। यदा केनापि एतेषु कस्मैचित् उत्कोचो दत्तः तदपि गूढरूपेणैव। तदपि प्रमाणम् न सहते। परंतु एतैः वितण्डावादमाश्रित्य निर्णयाः दत्ताः। एतैः कृतेषु निर्णयेष्वेतेषां वितण्डावादः स्पष्टं दरीदृश्यते। अतस्ते वितण्डावादेनैव दण्डयितुम् शक्यंते। स स्फुटवक्ता आसीत्। तान् धर्माधिकरणिकान् साटोपम् निर्भर्त्सयन् ईषन्निष्ठुरेण स्वरेण प्रव्यक्तमिदम् ऊचे –

'न भवद्भिः सुष्ठुरं कृतम्। भवताम् दोषस्तु अस्मिन् विषये मे स्फुटीभूतम्। भवंतः शासनवृत्तिं भुञ्जानाः पुष्कलां वृत्तिं क्रमिकां वृद्धिं चाधिगच्छंतः एवम् स्वैरितया आचरंतो लोकानाम् आक्रोशविषयतां गताः इदानीङ्कथम् दण्डनिपातो भवत्सु कर्तव्यः ? कठोर-

दण्डविधानङ्कर्तव्यम् सुगमदण्डो वा पातितव्यः? दण्डस्य सारल्येन भवन्तो निदेशे न स्थास्यन्ति। भवन्तः उच्चः पदास्पदंभूताः एवमधर्माचरणम् कुर्वन्ते। अस्य उच्चैर्वादो भवद्भ्यः स्वदते। अतः आत्मनो हितान् वृहयितुमादेशमुल्लङ्घयन्तो यथेच्छमाचरन्ति। भवताम् वाच्यदर्शनात् लोकगोपणमोपकवदाचरणाद् अहम् नितरामसंतुष्टोऽस्मि। किं भवन्तो वक्तुमिच्छन्ति अस्मिन् विषये?

ते सर्वे एकस्वरेण ऊचुः 'न.सासु केनापि जानता स्खलितिः कृता। यश्चापि निर्णयः अवितथः केनापि कृतस्तत्र तस्य बुद्धिदोषो न तु चारित्र्यदोषः। असद्देश विधानम् न्यायाध्यक्षेषु चारित्र्यदोषमेव दण्डम् विदधाति न तु तेषाम् मतिदोषम्। अतो वयम् न दण्डनीयाः'॥

सोऽध्यक्षः प्रोवाच 'यदि कश्चिद् बालको ज्वलन्तम् काष्ठमादाय अस्माकम् वस्त्रेषु प्रक्षेपणाय आयाति तदा स निवारयितव्यो न तु दण्डनीयः। तत्र तस्य मतिविभ्रमः न चारित्र्यदोषः। एवमेव भवन्तोऽपि निवारणीयाः न तु दण्डनीयाः। वयंभवतः कण्ठे पाशं नियोज्य न मारयिष्यामः कारागारे न स्थापयिष्यामः अर्थदण्डम् न करिष्यामः। चपेटिकां न दास्यामः। लगुडैः न प्रहरिष्यामः आयसैः निगडैः वा न सन्दान-यिष्यामः। केवलमेतस्माद् अभियोगनिर्णयकार्याद् निवारयिष्यामः। न भवन्तो न्यायसञ्चालनकार्यम् आयत्याम् कुर्वन्तु। एवं एतेषाम् प्रवर्धनम् भविष्यति। भवतामधिकारो व्यावर्तिष्यते। भवताम् शासन-नियोज्यता विरक्ता। भवन्तः स्वाधिकाराच्च प्रच्याविताः

गच्छँतु भवँतः स्व २ गृहम् । नास्माकम् किमपि प्रयोजनम् भवद्भिः' ॥

सर्वे ते अष्टाधिकाराः विपुलवृत्तिनाशेन विवर्ण-वदनाः अप्रतिविधेयकृताः स्व २ गृहञ्जग्मुः।

वसुपतिश्च प्रोवाच अध्यक्षः 'न भवान् मदायत्तः। भवँतम् वारयितुम् दँडयितुम् वा नाहम् प्रभवामि; भगवानेव भवँतम् दँडयिष्यति' ॥

वसुपतिः अनुसंधानसमाप्ति यावत् तस्मिन्नगरे चतुरः मासान् निवसन् स्व गृहम् यातः। प्रावृट्कालो गतागतमकरोत्। गृहमागच्छतस्तस्यैकम् मित्रमपि मार्गे तम् प्राप्तम्। तदपि तेन सह तस्य गृहमागतम्। तालकबँधेन पिहितँ द्वारं प्रति आगत्य स्थितः। कुञ्चिकया च तालकमपनीय द्वारमनर्गलम् कृतवान्। द्वारं अपावृत्य सुहृदा सह कोष्ठाभ्यँतरे प्रविष्टः। कोष्ठम् प्रविश्य यावत् स कोष्ठस्यैकस्मिन् कोणे निहितमशीति सहस्ररूप्यकमुद्रापत्रपुञ्जम् प्रति गतस्तदा किमपि नासादितवान् तत्र। केवलँ मृत्तिकाकूर्चमेवासीत्। किं भूतँ मम मुद्रापत्रपुञ्जस्य। मयैको अशीतिसहस्र-मुद्रापत्रपुञ्जोऽस्याः मँजूषायाः पश्चात् प्रक्षिप्तः यतः रात्रौ कश्चित् कुम्भीलकोऽपि आगच्छेच्चेत् मँजूषां गृहीत्वा धावेन् न तु अंधकारे पत्रपुञ्जम् निरीक्षेत्। कुतः स पत्रपुञ्जः गतः' ?

तस्य मित्रम् तस्य मुखमनिमिषँ पश्यति स्म।

'अहह ज्ञातँ मया। यमकिङ्करैः ममाखिलँ धनँ नाशितम्। अहञ्च दँडितः'।

'के ते यमकिङ्कराः सार्गले द्वारे पिहिते कोष्ठं प्रविष्टाः धनञ्च हृतवँतः ? इति तस्य मित्रमपृच्छत्।

ते यमकिंकरा अत्र वल्मीकरूपेण प्रादुर्भूताः । यथा यमकिङ्करा न कुतश्चिदागच्छँतो दृश्यँतेऽपि तु तत्रैव स्थाने प्रकटीभूय स्व कार्यं कृत्वा तत्रैवांतर्हिताः भवँति एवम् ते वल्मीकरूपधारिणः यमकिंकरा ये दृष्टेरगोचरस्य पुनःपुनरस्पृश्यमानस्य वस्तुनः चर्वणे विशेषँ रुचिम् दधति अत्रैवाविर्भूय प्रावृषि स्व कार्यं परिसमाप्य दृष्टिलोपङ्गताः इति स उवाच वसुपतिः शिरस्ताडयन् ॥

... * ... * ... * ... * ... * ... * ...

एकदा कश्चिज्जनः स्व गृहाद् ग्रामांतरङ्गन्तुं मनोदधे तेन सहैको कुक्कुटोऽप्यासीत् । कुक्कुटं कुत्रापि त्यक्तुमक्षमः आत्मना सह तमपि नेतुं निश्चिकाय । परंतु बाष्पशकटेन यात्राकरणाय स्व यात्राशुल्केन सह कुक्कुटस्यापि यात्राशुल्कं देयमासीत् । स तं कुक्कुटं एकस्यां पेटिकायां निधाय खाद्यपदार्थावृत्तेन फलकेन तस्याः मुखमाच्छाद्य यानवाष्पस्थानकमायातः । तत्र प्रवेशद्वारे स्थितेन एकेन कर्मचारिणा 'अस्यां पेटिकायां किं' इति पृष्टो 'नास्ति किमपि मम भोजनादृते' इत्यब्रवीत् । राजकर्मचारी तस्मिन् विश्वस्य तमसृजत् यदा स यात्रिकः कानिचित् पदानि एव गतः आसीद् तदा स कुक्कुटः पेटिकाभ्यंतरात् 'कुकडूं कूं' इति शब्दमकरोत् । कर्मचारी तमाहूयापृच्छत् –

अस्यां पेटिकायां कुक्कुटोऽस्ति । अस्यापि शुल्कं दातव्यम् । कुक्कुटः स्पष्टं कुकडूं कूं इति शब्दङ्करोति । कथमिदम् ?

यात्रिकः उवाच :– कुक्कुटाः प्रायः प्रातः लोकान् प्रबोधयितुं शब्दं वितन्वंति । कुक्कुटोऽयमपश्यद्भवान् सुप्तवदाचरति । अतः कुकडूं कू इति शब्दं कृत्वा भवंतं प्रबोधयति ॥

कर्मचारी बभाषे त्वम् तु ब्रवीषि नास्ति अस्यां पेटिकायां मम भोजनाद् अन्यत् किमपि ।

यात्रिको बभाण अयं कुक्कुटोऽपि मम भोजनमेव । कस्मिंश्चिद् दिने स पतिष्यत्येव ममोदरे । नास्ति किमपि अलीकमत्र ॥

— * — * — * — * —

ॐ

# स्वामी बृहदाचार्यः

स्वामी बृहदाचार्यः गुर्जरदेशे भँगूरीनाम्नि ग्रामटिकायां गतशताब्द्यां औदीच्यगोत्रे प्रख्यातब्राह्मणकुले जन्म प्रपेदे। पिता तस्य साम्बशिवनामा ऋजुस्वभावः सुवृत्तः सदाचारः पानद्यूतादिव्यसनैर्विहीनः व्यूढोरस्कः वृषस्कन्धः सुश्लिष्टशरीरं विभ्राजः स्वं कृत्यम् सुष्ठु संविदानः कापथमनभिनिविशमानः पुरोहितवृत्त्या जीवनयात्रां वाहयति स्म। कल्पश्रौतसूत्रेषु अधीतिः मध्यमवयस्कः स ब्राह्मणः प्रत्युषसि समुत्थाय स्नानोपकरणहस्तः कूपङ्गत्वा कृतोसावी वृक्षान् रेचितपुष्पान् विधाय कुसुमानि चित्वा स्व यजमानस्य गृहङ्गत्वा स्मेराननः नमः शिवाय इति प्रोच्चार्य 'अगदं तेऽस्तु। इष्टेन युज्यस्व सर्वमायुरिहि इत्याशीर्भिः संयोज्य पुष्पग्रथितमाल्यम् तस्य कण्ठे ऽर्पयति स्म। दक्षिणामादाय स्व गृहं प्रतिनिवर्तते स्म। जनिमासाद्य यदा तस्य तनयो मातुरङ्कशायी स्तनंधय एवासीत् तदा स तं परमशिवाभिधानं विदधे। अथ गच्छत्सु वर्षेषु परमशिवः शैशवमतिनीतवान्। धातुषु क्षीयमाणेषु वर्षीयानभूत् सांबशिवः। तस्य मरणसमयः समुपपन्नः आसीत्। एकदा स प्रवयः गदीभूतः। एको वैद्यो यः साधूपक्रामति स्म आतुरान् तस्य चिकित्सायै नियुक्तः। यद्यपि वैद्यः सुष्ठु चिकित्सयति स्म रोगिणः परंतु स्थविरस्य साम्बशिवस्य रोगापनयने न स प्रभुरभवत्। ग्रामश्च महामारी-

क्रांतमासीत्। साम्बशिवस्य व्याधिरसाध्यताङ्गतो॥ वृद्धभावमुपागतोऽसौ न गदान्निर्गतः। किंचित्कालानंतरं नष्टोल्लासहताशो विनष्टवाक् स स्थविरः प्राणान् उज्झाञ्चकार। आसीत्तदा संध्याकालः। प्रदोषाप-गमाद् न चिराद् अंधकारो व्यजृम्भत। अतिक्रांत-कैशोरः परमशिवः पितरि स्मर्तव्यशेषतां प्रयाते आर्तस्वरेण रोरुद्यमानः कथं कथमपि कालीं निशां अनैषीत्। उदञ्चति मरीचिमालिनि गगनतलात्तारा-मण्डले क्रमेन तिरोहिते प्रगे प्राग्दिशा धूसरवर्णो रक्ततां पर्यवर्तत। परमशिवः प्रत्यूषे यथाकथञ्चिद् आत्मानं पर्यवस्थाप्य जनयितुः विगतासुम् भौतिकम् पिण्डम् शवाच्छादनेन आच्छाद्य पितृवनमानीय काष्ठानि सञ्चित्य चितां विरचय्य शवमग्निसात्कृतवान् स च निष्प्राणो देहः काष्ठप्रदानं कृतः दीपितायाम् चितायां वह्निना संस्कृतः॥

परमशिवस्य माता तु पूर्वमेव प्रमीतासीत्। पितरि पञ्चत्वम् प्रपन्न करुणाविमुखेन मृत्युना अपवाहिते पितरि परमशिवः करुणार्थग्रथितं विलपन् अभिषङ्ग-जड़ः शुचो वशङ्गतः। दुःखमोहितं तम् न कोऽपि प्रकृतौ स्थापयितुम् शशाक। अकामोपतेन पितुरव-सानेन तप्यमानं हृदयं तस्य अवष्टम्भुम् दुःखञ्च तस्य उपशमयितुम् न कोऽपि प्राभवत्। स प्रभूतं दीन-क्रन्दनं करुणपरिदेवनं भालताड़नमकरोत्। क्रमेण मन्दीभूतपितृमरणशोकः किंचिदपशोकमना शोका-नलज्वालावलीढ़ः स गृहान्निर्जगाम यथा आग्नेयचूर्ण गुलिका अग्निस्फुलिङ्गदिग्धा नालिकाया निर्गच्छति। अटाट्याञ्चाकरोद् अनेकदेशेषु॥

जन्मानँतरं कतिपयमाससञ्जातसंचँक्रमणशक्तिः तदनँतरं वक्तुमुपक्रममाणः सुव्यक्ततया समुच्चारयितुँ क्षमोऽभवत् पित्रा पाठशालायाँ प्रवेशितः । सोऽक्षराभ्यासेन बाल्यसमयम् निरवर्तयत् । कालेन तस्य शैशवमतिचक्राम । तस्य पिता तस्मै किंचिद् विद्याँ व्यश्राणयत् । इदानीं पितरि गतपञ्चत्वे स ब्रह्मचारी संवृत्य देशाद् देशान्तरं परिबभ्राम प्राप चैकँ आश्रमालयम् अंतेवासिवत्समार्ँ चिदानन्दस्वामिनम् । ललाटबद्धाञ्जलिः स्वनामोच्चारणम् स तम् ववंद्र । स तु चिदानन्दः वीतरागिणां वृत्तिमाश्रित्य उपांशु एकास्मिन् आश्रमे धारणाँ परिचेतुम् सन्निवृत्तयेऽभोग लोलुपँ मनः परमात्मनि सन्निवेशयितुम् वन्येन वर्तयन् कालमनयत् । दिवसस्य अधिकँ भागम् स प्रसंख्यानपरोऽतिष्ठत् । परमशिवः तस्य पादौ निर्णिज्य अर्थ्याभिः स्तुतिभिः तमभिष्टुत्य तस्मै अर्पितात्मा प्रतिदिनम् तम् सिषेवे । तञ्च गुरुम् यथा चिदानन्दस्तम् शिष्यमकुरुत । महेच्छः उदारशीलः महावृत्तः स परमशिवः सद्वृत्तम् परार्थ्येन तम् पतात्मानम् भोगनिःस्पृहम् स्पर्शनिवृत्तलौल्यम् तम् चिदानन्दम् अवदातैः स्वकर्मभिः भृशम् तुतोष । हस्तपादावमर्दनादिपरिचर्यया तम् परितोषमनयत् तस्य गुरोः वाचँ हृदि उपधातुम् लब्धपदक्कतम् तास्मन्नावेशितचित्तो बभूव । एवम् तस्य विद्यामभ्यस्यतः काश्चित्समाः व्यतीयुः । सर्वाः विद्याः जग्राह सः । सर्वाः विद्याः तस्य जिह्वाग्रेऽस्फुरन् । सोऽध्ययनम् पर्यणमयत् । विद्योपादानम् व्यरमयत् ॥

उपात्तविद्यस्य तस्य परमशिवस्यैकदा ध्यानँजुषः

मनांसि इत्थम् उत्थितम् यदहम् जगतः उपकारम् वितनुयाम् । कापथे प्रवर्तमानानाम् अनिमतान् चेतसि श्लाघनीयान् भावान् निवेशयितुम् तांश्च सुपथाध्वीनान् कर्तुं उपायम् आतिष्ठेयम् । लोकेषु मेषपरम्परावत् गतानुगतिकत्वम् प्राचीनरवानुसारित्वञ्च बहु प्रवर्तते । अहञ्च तेषाम् भावनिवहान् विद्योतितान् सुपरिमार्जितान् परिष्कृतांश्च विधास्यामि । मम क्रांतदर्शित्वम् माम् अस्य कार्यस्य धुरं वहनाय योग्यम् प्रमाणयति । एषु लोकेषु उपदेशा दातव्यः । उपदेशस्य च अनुवर्तनाय ते प्रणोदितव्याः । कष्टकरेषु व्रतपालनेषु अनुद्युञ्जानानाम् मोघीकृतनाम्नाम् पुरुषापसदानाम् अजनिरेव वरम् । देशस्य सर्वाङ्गीणोन्नतये उत्कण्ठते मे चेतः । मातृभूमिप्रेमा माम् प्रचोदयति । यथा जागरूकजनमतस्थापनाय उद्यमङ्कर्तव्यम् जनजागरणञ्चानुष्ठेयम् । मम प्रयत्नस्य फलरूपेण समर्धिष्यति मम देशः । अयम् मनुष्यजन्म दुर्लभम् । तत्रापि यौवने एव मनुष्यः उद्यमङ्कर्तुम् पारयति । यौवनम् संतिष्ठते । देशोपकाराय कीर्त्युपचयाय यतितव्यम् । यथा लोकानाम् अविद्याज्ञानरूपा ग्रंथिः विमुच्येत तेषाम् संशयाः विनिवर्तेरन् यथा च ते इन्द्रियाणि अधर्मवर्त्मनोऽपसार्य धर्मे वर्त्मनि सततम् प्रवर्तयेयुः तथा चेष्टितव्यम् । लोकाः मनागपि स्वबुद्धिम् वितत्य न विमृशंति । एनाँसि विधाय जगति विचरंति । एनसाम् निवृत्तिः करणीया येन अभ्युदियाद् अयम् देशः स्वे महिम्नि च जागर्यात् । लोकाः कृत्याकृत्यं प्रजानीयुः । आयतिकम् अभ्युदयञ्च प्राप्नुयुः । एषा मे व्यवस्थिता मनीषा । यदि लोकाः

असन्मार्गमभिनिविशंते नूनं ते प्रलेभंते । ज्ञानः विहीना नराः पंगुरिव पदेन अन्धेन प्रेक्षावता नश्यंति । लोकस्तु ह्रस्वं पश्यति न दीर्घम् । सांदृष्टिकम् एव अनुरुध्यंते न दूरकम् । बद्धमूला दृढम् खाताः पुंसाम् हृदि कामा न सहसा उद्वर्तयितुम् शक्याः । तप उद्धारः दुर्घटो महता प्रयत्नेनैव साध्यः । सदसती विवेक्तारः तस्य प्रतिपत्तारः सत्कारः एव प्रमाणम् आत्मानं क्लेशित्वा यः कलयति दुःखानि परकीयानि स एव देवत्वमापद्यते । यथा ते कुपथवर्तिनो जीवाः परिक्षुण्णम् वर्त्म त्यक्त्वा सन्मार्गावलंबिनः स्युः विगीतानि कर्माणि परित्यज्य धर्मम् संचिनुयुः असंभिन्नमर्यादा हतकिल्बिषाः प्रशस्तानि निषेवेरन् अधर्मं प्रसक्तिञ्च जह्युः तथा मया प्रयतनीयम् ॥

इत्थम् विनिश्चित्य अवसितब्रह्मचर्य्याश्रमः स सन्यासमुपादाय यौवने पदमादधानः गुरोः आशिषं प्रगृह्य लोककल्याणाय प्रावर्तत । स तत इतः भ्रमित्वा गुरोः स्पर्शं प्राप्य विद्वद्रूपेण परिणतः लोकमङ्गलाय प्रावर्तत यथा वारिवाहा अद्रिशिखरः स्पर्शमासाद्य जलम् मुक्त्वा सरिद्रूपेण लोकहिताय कल्पंते ॥

घनानन्दो भैक्ष्यमाहरन् देशे यत्र तत्र पर्यटीत् । राधानगरे दीपावली उत्सवः महता समारम्भेण प्रवर्तमान आस्त । सा नगरी सर्वासु नगरीषु शेखरायते तत्प्रदेशे । अनल्पसंख्या जनास्तत्र उपस्थिता आसन् । महान् जनसंनिपातस्तत्र भवत् । देशाभ्युदयापेक्षया अंगीकृतदुःखः स घनानन्दः कायाम् निबध्य तत्र प्रापत् । स एकश्चत्वालोऽवस्त पट-

खण्डेन च तनूमाच्छादयत्। कुँकुमकर्दमेन च ललाट मतिलकयत्। तत्र चैकां पताकाँ दोधूयमानाम् निचखान यत्र एकस्य वँशस्याग्रे ध्वजः प्रास्फुरत्। तस्य पताकां दृष्ट्वा जनास्तत्र समवायन्। तस्य वचाँसि दत्तचित्ता अशृण्वन्। तदुपरि पुष्पाणि अवाकिरन्॥

तत्र भवान् समवेतान् जनान् सम्बोध्य देशोन्नति मधिकृत्य व्याख्यानँ ददौ। प्राग्वे निश्चयाम् पञ्चवादः मितायां वेलायां स व्याख्यानँ प्रारभत। इदम् स भवान् व्याजहार –

अस्माकम् अयम् प्रेष्ठो देशः। यस्मिन् स्वदेशभक्तिः अल्पीयसि अपि वर्तते स स्वदेशोन्नतये व्याकुलो भवति। देशोन्नतये ऐक्यम् सम्पादनीयम्। इदम् हि प्रथमँ नः कर्तव्यम्। ऐक्येन विना उन्नतः न भवितु शक्नोति। एकः एकां दिशाङ्गच्छति अपरोऽन्याम्। मिथो विरोधेन द्वावेव पततः। अतः सर्वस्मिन् देशे एकात्मानुभूतिरुद्भावनीया। स्वपरभेद उत्खन्येत। समवेदना च प्रोच्छलन्ती विद्येत। स्वदेशीयः कश्चन् अपि नरः स्व देहान्न विशिष्येत। अयमभिजातोऽयम् प्राकृतः इति विचारो नोदियात् कस्यचिद् हृदये। कोऽपि स्वदेशवास्तव्यः पृथग्जनो न मँतव्यः। परस्परं वैमनस्यँ विनाश्य एकमत्यञ्च समुपचेतव्यम्। तदर्थम् भाषाभेषैक्यम् आचारविचारयोरैक्यञ्च यत्नेनोपादनीयम्। तत् तु स्वदेशभाषाभेषप्रचारेणैव सँभवति। सर्वेषामेकैव भाषा एकव च गीरपि भवेत्। यत्र च जना अन्योन्यगिरं नावगच्छँ तेनत्र तेषां मैत्र्यं दुर्लभम्। भाषाभेषभेदेन मनुष्याः विच्छेदमापाद्यते।

आन्तमेवभेदस्तान् मिथोभेदयितुँ प्रभवति । तान् परस्परास्तन् वैरायितुञ्च शक्नोति। शात्रवापादनञ्च करोति तेषु। सर्वाणि जात्यङ्गानि सङ्घटनीयानि।ऐक्यापादनायेदमपि आवश्यकं यत्ते एकत्र भूत्वा परस्परं गोष्ठीम् कुर्वन्तु। गल्पिनो गल्पांश्च श्रावयँतु। एकपात्र भोजनम् परस्परम् उच्छिष्टाशनञ्च प्रीतिं वर्धयते। ऋग्वेदेऽपि अभिहितम् –

ॐ सह नाववतु सह नौ भुनक्तु ........'

अस्माभिः सुहृत्तया वर्तितव्यम्। एतदर्थम् धूमपानिकाऽपि विशेषमुपकरणीयभावङ्गमिष्यति। यदा जनाः समवयँति तदा तेषु एको धूमपानिकां प्रपूर्य नलिकां संयोज्य मुखेन धूममाकर्षति धूमपानिका च गड्गड्ेति निनदति नासाननविवराभ्याञ्च धूमो निर्गच्छति। अन्याश्च तत्रोपस्थिता रम्याः कथाः कथयँति वार्त्ताः ख्यायँति। ततः पर्य्यायेण सा धूमपानिका एकैकस्य हस्तङ्गच्छति। सर्वे एव समवेताः धूमपानम् कुर्वते। एवमन्योऽन्येन सह मैत्री गच्छंति अन्योऽन्यस्य निरंतरञ्चित्ताः सुहृदो जायँते। सहोदरा इव प्रीतिमँतः परस्परमनुरक्ताश्च लोका अभ्युदयँते। देशाय इदमपि हितावहम् यदेतद् देशवास्तव्याः नरा वीरभावयुता भवेयुः वीरापदानानि कर्तुं प्रभवेयुः। वीरतापादनाय पुरुषान् प्राणानुपजिहीर्षून्संपादनाय च विविधा उपाया उपपाद्यँते युद्धेषु। एकस्तु वीरताजनकवाद्यतोद्यम्। तद् वाद्यातोद्यध्वनिं श्रुत्वा सँग्रामयमाणा योधा मृत्योरपि न बिभ्यति। अपरस्तु सुरापानम्। मदिरां पीत्वा उन्मत्ताः सँतः युध्यँते। न कस्माच्चिद् बिभ्यति। सिद्धहस्ता योधा भवितुम्

पारयँति महद्विशसनञ्च कुर्वंति –

'एको हि दोषो गुणसन्निपाते निमज्जतींदोः
किरणेष्विवाङ्कः'।

यथा दधिसंमिश्रितम् दुग्धमपि दधिभावेन परिणमते एवमेव वीरताजननाय आसवप्रयोगोऽपि दोषम् नावहति ॥

परन्तु वीरतयैव विजयो न प्राप्यते। शारीरं बलमपि अपेक्ष्यते। दैहिकबलोपचयाय स्वास्थ्यम् महत्तमम् साधनम्। निकृष्टम् हेयञ्च भोज्यम् वर्जनीयम्। मनुष्येण तथा आचरणीयँ यथा गदो न पदमादधीत एतदर्थम् स्वच्छवायुजलभोजनपानादिकमावश्यकम् स्वच्छजलभोजनपानादिभिराप्यायितशरीरो नरः वैरिणाङ्क्षयाय प्रभवति। मत्कूणे ईंनयावनँ कुरु। नखान् संहारयेः। वस्यभोजनमशुद्धभोजनँ मा कुरु। शिरःकेशान् कर्तय। श्मश्रूणिमुच्छाञ्च छिंधि। श्मश्रुकूर्चंनवणाद् भोजनपाने सम्यक्कर्तुं न पार्यते। केशेषु चोच्छिष्टँ तिष्ठति। पुष्टिदायकँ भोजनमप्यत्र माहात्म्यँ बिभर्ति। इदानीं देशस्य खाद्यप्रश्नो नितरां चिंताम् जनयति। न एतावती खाद्योत्पत्तिः देशे यावती जनसंख्या। एतावताम् मेषाणां अजानाँ कुक्कुटानां च भक्षणाय कियती मात्रा अन्नस्य सस्यखाद्यस्य च व्ययी भवति। न तेषाङ्किंचिदपि उपयोगः। जातेषु शावकेषु प्रायोऽर्धाः अजा मेषाः कुक्कुटा अर्धाश्च अजाः मेष्यः कुक्कुट्यो भवँति। एकोऽजो मेषः कुक्कुटो बहुसंख्यकासु अजासु मेषीषु कुक्कुटीषु संतानोत्पत्त्यै अलम्। अतस्तेषां मांसाशनम् देशस्य खाद्यप्रश्नम् समाधातुमर्हति। एवमेव मीनमत्स्यानां सङ्क्षयमपि।

इदमेव उपदिदिक्षामि। इदमेव भवद्भ्यः उच्चैरावेदयामि। यदि यूयम् स्व मनोरथानुवर्तनाद् पराङ्मुखा न स्थ तर्हि युष्माभिः इमे नियमाः अनुवर्त्याः। यदि यूयँ श्रेयस्कामाः तदा युष्माभिरिमे नियमाः पालनीयाः। एवं यूयम् दोषेण न लिप्स्यध्वे। इयञ्च भूमिः गुरुदेवानाम् पवित्रपादैरलँकृता भविष्यतीति मे मतम्॥

प्रश्नस्त्वस्याँ पादोनाष्टनाडमितायाम् वेलायाँ स्व हृदयभ्रादभिभाषितँ समापितवान् घनानन्दः।

तालिका अताड्यँत। साग्राणि पञ्चसहस्राणि पुरुषाः तत्र समवायन्। शरीरेण हृदयेन च संनिहितास्तस्य उपदेशमगृह्णन्। तस्योपदेशः सुष्ठु प्राभवच्चेतसो तेषाम्। समवेताः जनाः मुहुर्मुहुस्तस्मिन् कृतज्ञताम् समुदैरयन्। तदाज्ञाश्च शिरसा प्रत्यपद्यँत। स्वामिनः निर्मलनाम सर्वैः प्रस्तुतम्। सर्वत्र इदम् उदघुष्यत आगतोऽस्ति अत्र कश्चिद् नृतमो यो हितेन वचसा लोकानाङ्कर्णौ पूरयति। वात्सल्यमाचरति। अज्ञानमूलकानि दुःखानि दूरीकरोति। तमसो ज्योतिर्गमयति असतः सत्यम् सङ्गमयति। अखिलजगतो हितम् साधयति। अज्ञानतिमिरांधानाञ्चक्षुषी ज्ञानशलाकया उन्मीलयति। अन्नारजीवनम् प्रबोधेन सारवत्तरं विदधाति। धिषणाँ धिनोति। तत्त्वमुपदिशति। प्रमादाद्रक्षति। सत्कर्मणि प्रवर्तयति। धर्मे प्रवर्तयति। तस्य परमकारुणिकस्य गुरोर्महोपकाराणाङ्गणना कः कर्तुं प्रभवेत्॥

तस्योपदेशस्य संस्काराः सर्वत्र देशे व्यानशिरे। वार्त्तापत्रेषु तस्य भाषणस्य सारः प्रकाशितः॥

एवँ प्रचुरा कीर्तिर्लब्धा घनानन्दस्वामिना विख्यात-

नामा च जातोऽसौ ॥

एवं वृत्तपत्रेषु प्रकाशङ्गते तस्य उदंते कल्याणपुर-निवासिनस्तं भीसद्वशम् प्रेषितवंतः 'कुरु प्रसादमुपदेशप्रदानेनेति'। ततो भगवान् यतिलिङ्गधारी देशहिते व्यापृतः स्व दुःखकष्टमविगणयन् शीतबहुले दीर्घयामात्रियामाभयङ्करे शिशिरे वर्षवात्याहति क्लान्त वस्त्राणि अविचारयन् तस्मात् स्थानात् प्रास्थितः कल्याणपुरं प्रात् दोधूयमानां पताकाञ्च तत्र अस्थापयत्। तस्यागमनं निशम्य दर्शकाः जनाः नानादिग्देशेभ्यः सन्न्यपतन् तस्य ध्वजदंडम् परितः समवायन् पताकाञ्च उदश्रायन्। तमस्तुवन्। भूयांसो जनास्तमुपस्थितास्तस्य शुश्रूषायाञ्चोत्थिताः। कश्चित्तस्य पादौ करोति कश्चिद्व्यजनं नीत्वा वायुम् विदधाति कश्चिच्च गीतिकाङ्गायति। भगवान् विशालवक्षा उदग्रबाहुः कुंकुमदिग्धललाटस्तत्रस्यां दशां समयक्षपन्नैषीत् विश्रामञ्च अननुत कांश्चित्कालम्। स्थीभूते सार्धयामादभितायां वेलायां महोपवर्हमेकं पृष्ठेन आश्रित्य पादौ प्रसार्य धर्मविषये भाषणङ्कर्तुम् प्रारब्धः प्रकामं निःशब्दता सर्वत्र व्यराजत। भाषणस्य अयम् नङ्क्षोऽर्थः –

धर्मो न चलोपनीयः। यो धर्मं विलुम्पति स नश्यति। धर्मभुज्ञापयिता अधर्मम् न्यग्भावयिता पुमान् लोके अविनश्वरं यशः प्राप्नोति। यावद्वयम् आत्मानम् पापभयो न पुनीमः न तावद् असाभ्यम् अस्माकं भविष्यति। धर्मेणैव अक्षयो लोकोऽर्ज्यते। धर्म बधा तनो न कदापि सुखम् लभंते। सदा दुःखेन नश्यंते। येऽधर्ममभिनिविशन्ते ते क्लिश्यंति। देशस्य

न्यायव्यवस्थापरिपालनमेव धर्मः। न्यायव्यवस्था धर्मनियमानुसारेणैव प्रवर्तितास्ति। यो न्यायव्यवस्थामुल्लङ्घयति स धर्मान्प्रच्यवते। अन्यायम् कर्माचरन् दण्डयितव्यः। परंतु यो धर्मे तिष्ठति न किमपि न्यायविरुद्धमाचरति न स पीडयितव्यः। निरपराधो न कोऽपि हिंसितव्यः कृमिकीटपतङ्गोऽपि सन्। ये निर्दोषस्य कस्यापि किमपि हिंसाम् समाचरंति ते नराः प्रबलागसः संति। देशस्य न्यायव्यवस्था तु इदम् वक्ति 'अपि नाम दश अपराधिनोऽदण्डिताः गच्छेयुः परंतु एकोऽपि निरपराधी न दण्ड्येत'। धर्म पुस्तकानाँ नैयत्येन परिशीलनम्, देवालयानां दर्शनम् धर्मात्मनां सङ्गतिः एष एव स न्यपेक्षितः पँथा एष एव साध्वाचारः। समुन्नतचेताः धार्मिको नरः पापेभ्यः सुदूरमवतिष्ठते। धर्मात्मानः एव तनुभृतः सुवर्ण पुष्पिताँ पृथिवीम् विचिन्वँति तेभ्यो मर्त्यलोकोऽपि नाकति। भूतिमिच्छता देहभृता अपोह्य किल्विषम् धर्मो आदरणीयः। सर्वेऽस्मिन् भूलोके स्व कर्मपाकम् समाश्रयँति। उत्पथप्रतिपन्नाः दुःखम् लभंते। ते नारकीया जना जायंते। परमात्मा निरये निपात्यँते। राजद्वारे दण्ड्यँते। भावितात्मानो नराः सुखम् कालँ नयँति। राजदण्डो न तेषु पात्यते। परमात्मापि तेभ्यः फलचतुष्टयँ प्रददाति। तेषां पुण्यात्मनाम् नाममात्रेऽपि गृहीते क्षेमञ्जायते। धर्मभावना उपचेतव्या। अत्र सुरापानम् विशेषम् उपकरोति। यादृशी यस्य प्रवृत्तिः मद्यपानम् ताम् समेधयते। मदिराम् पीत्वा विशेषेण धार्मिकभावनाऽभिभूतो जायते नरः। धर्मभावनया शिरो घूर्णयते अक्षिणी चालयते। समाधि-

अवस्थायाँ लीनो भवति। परमात्मनि विनिवेशित-चित्तो भवति। सर्वविधोद्यमेन धर्मः प्रचेतव्यः। लोकाः स्खलनशीलाः। दुष्कर्मसु नदीष्णो जनः कथं परमात्मनो दण्डाद्राजदण्डाद्वा आत्मानं मोचयितुम् प्रभवति इति भवन्तो विविदिषिष्यन्ति। एतदनुक्त्वा अस्य भाषणस्यावसानम् न युक्तम्। तत्र इदं मे मतम्। परमात्मनः स्तुतिकीर्तनम् परमेशस्य प्रार्थना परमात्मनः अपराधक्षमापणप्रकारः। परंतु राज्याधिकारिणः स्तुतिप्रार्थनाभ्यां न मोदयन्ति। तत्र तु भिन्नः प्रकारः। तत्र श्मश्रुवर्धनमेवात्मानं रक्षितुम् प्रभवति। श्मश्रुलो जनोऽपराधं कृत्वा श्मश्रुमुण्डनम् विधाय न केनापि अभिज्ञायते। न स प्रगृह्यते न राजदण्डः तस्मिन् विधीयते॥

अवसिते भाषणे समुपस्थिता लोकास्तस्य मूर्ध्नि प्रसूनानि ववृषुः। कोटिशो धन्यवादांश्च अवादिषुः। भवतास्मभ्यम् मोक्षमार्गः प्रदर्शितः इति च निजगदुः तस्योपकृतीः चेतसि ध्यायम् २ अशंसिषुः जनाः। तस्योपदेशस्तेषां हृदि पदमलप्सत। तस्य मात्कयाग्र अन्योऽन्यमस्पर्धन। तस्य पादौ न्यपीडयन्। प्रभूतं प्रीतिदायांश्च तस्मै व्यतरन्। तेन निर्दिष्टम् मार्गम् अनुवर्त्स्यामि इति च दृढसङ्कल्पमकुर्वन्। तत्पश्चात् जनसंमर्दो विकीर्णोऽभवद्। पृथिवीभारस्य लघूकरणार्थम् सदैव उल्लिष्टमानः स भवान् विश्रमम् नालब्ध। विनीतवेषो वनीपकवृत्त्या निर्वहन् लोकानां आचाररक्षणपरोऽभूत्। द्विदिनमेव कल्याणपुरेऽवः स्थानम् कृत्वा ततः प्राचलत्। आपृच्छनाय समवेतेभ्यो जनेभ्यः पुनरागमनप्रतिश्रवम् कृत्वा स आशी-

भोजनपानाय । धनाभावः देशस्य जनसँख्यामपि न्यूनयति । मनुष्याश्च निष्कुलानू सुमारभ्यः। एवमस्य देशस्य मूलोच्छेदः सँपत्स्यते । किमत्र समाधानम् ?

तत्रभवान् समाहितेन चेतसा विचिन्त्य इत्थम् अगादीत्–

यदि एतद्देशीया विदेशीयैः सह वाणिज्यम् कुर्वीरन् तैः सह व्यवहरेयुः नूनँ तदा प्रभूततरं वित्तमासादितँ भवेत्। ते च वणिक्प्रवृत्तयो वाणिज्ये इदानीमग्रगण्याः। तदर्थम् बहुविधभाषावेशादिज्ञानमनिवार्यम् विदेशीयभाषाज्ञानेन वेशपरिधानेन धरणीपीठेभ्रमन् स्वजन्मनो फलम् लभत। अत एतद्देशीयाः स्वमतिं विदेशीयैः सह वाणिज्ये विनिवेशयेयुः । अर्थकामौ अपि यथाकालम् जुषस्व इति मे मतिः। यदा ते वणिग्वृत्त्या प्रचुरं धनमर्जयिष्यँति तदा ते आत्मानम् दारक्रियायोग्यदशाम् द्रक्ष्यँति दारांश्च परिग्रहीष्यँति। लब्धजन्मनाम् शिशूनाम् पालनार्थं वर्धनाय च तेषाम् सविधे वित्तम् भविष्यत्येव। गृहस्थाश्रमः आश्रमान्तरेभ्यो ज्यायान्। सर्वेऽन्ये आश्रमास्तम् गृहमेधिनम् उपजीवँति। समुल्लङ्घितकौमारा न उद्वहा गृहिणो भवेयुः गृहसञ्चालनम् कुर्युः । गृहाश्रमस्य नाहिं विनिन्द्यः संस्तौतां एव प्रशस्यः। गृहस्थानम् धर्मो महीयान् सर्वेधर्मेभ्यः। अनेनैव सर्वजगत सञ्चारयति अर्थतः इदमापद्यते यदेते लोकाः सर्वदेशभाषाविज्ञानं च प्राप्नुयुः । नानाविधवाणिज्यपद्धतिपरिचयम् पदार्थानाम् अर्घाधिगमम् क्रयविक्रयौ द्वीपद्वीपान्तरेषु गमागमौ च कुर्युः।एवम् पुष्कलां जीविकामधिगत्य

प्राप्तुम् प्रभविष्यँति निर्बोद्धुञ्च शक्ष्यँति । राष्ट्रम् एधिष्यते । अत्र इदमपि अवधेयम् । यदि ते परदेश भाषाभाषणाभ्यासम् परदेशवेशपरिधानञ्च इहस्थाः एव न करिष्यँति तदा ते तत्र गत्वा उपहासास्पदम् भविष्यँति यथा कस्मिन् विषये पदम् प्रदातुम् प्रवृत्ता जना परिहासास्पदम् यांति । तत्र गत्वा तद्देशवेशम् परिधाय ते नटाः इव प्रतिभास्यँति ॥

एवम् घनानन्दस्वामिना तेषाम् संशयाः छिन्नाः सर्वे तस्य वाक्यम् दत्तावधानाः अशृण्वन् । अस्मिन् समाधाने न केऽपि विसम्वदन् न केऽपि व्यूदिरे । अयम् नेतृतमः स्वानंदविश्वासः साधिष्टमुपायः गत लोकस्य । सर्वे तेन सहमताः अभूवन् । न केऽपि तम् व्यरुन्धन् । सर्वत्र तस्य यशोऽगीयत । स स्मेराननः स्मितविकस्वरमकरोत् सर्वान् । अयम् अस्मान् ग्रहण परिहरणविधिम् सम्यगुपदिशतीति विचारेण तेषां मनस्तत्रैव लग्नोऽतिष्ठत् । अखिलास्तम् सच्चक्रे । तदादेशो तैस्तस्के निहितः । तस्य चरितम् नेऽनुसृता आसन् । तस्य वचसि चेतो न्यहितवन्तस्तस्य सपर्यायां प्रसक्ताः । ज्ञालम् सम्बोधयितुम् तम् शरणम् गच्छँति स्म । हस्तौ तस्य पुरतः सम्पुटयँति स्म । अस्योपदेशेन उत्तमः उदर्कः प्रभविष्यति । तस्य शिष्यगणस्तस्मिन् आवर्जितोऽभूत् । तस्य दर्शनम् विधाय कृतार्थाः भवँति स्म । सोऽस्मान् प्रतिबोधयति चरित्रञ्च शोधयति । ते सर्वत्र तस्य यशः प्राख्यापयन् । साष्टाङ्गपातञ्च तम् प्रणामम् कुर्वँति स्म । अयमस्माकम् परिचर्यार्हो ऽस्ति निज नाम सान्वयङ्करोतीति कृत्वा ललाटतट चुम्बदञ्जलिपुटम् तम् प्रणमँति स्म । तस्य समक्षम्

कालम् आयुः आप्स्यथ । द्यूतसुरापानधूमपानादि-व्यसनानि सर्वथा त्यक्तव्यानि। दुरोदरः द्यूतं सर्वस्वँ हारयति। न किमपि शेषयति। यदा मनुष्यः पानं प्रसँक्ष्यति लोकैर्निराकरिष्यती। तस्य विवेको नश्यति मतिर्भ्रंश्यति। यदा मनुष्यः दुर्वृत्तैः सम्पृच्य व्यसनेषु प्रमज्जति तदा स विलासप्रियो भवति स्वैरितां व्रजति स्वेच्छाचारितायाम् तस्य रुचिरुदेति प्रचयमुपैति अंते च विषीदति । विमार्गगमनम् प्रसक्तिनिविष्टः अंते दुःखमाप्नोति । अतो मनोनिग्रहेण व्यसनेभ्यो मनो निवारणीयः। रेखामात्रमपि स्व निश्चयाद्विचलितुम् न युक्तम्। द्यूतमदिराधूमपान इत्येतानि प्रमुखानि व्यसनानि। द्यूतन सर्वस्वहारणा जायते। धरणी-पातँ यथोच्चिज्जल्पनम् वैकल्यँ करस्पन्दोऽम्बरत्यागः तेजोहानिः नेत्रादीनां शोणितवर्णता अंते मृत्युः इत्येते हालाहलोपमहालापानस्य परिणामाः। यः शीधुनि प्रमज्जति स भ्रश्यति आचारात्। मद्गमङ्गं क्रामति वाचा च सज्जमानया कथञ्चिद्ब्रवीति। मदकारकद्रव्याणाम् सेवनम् तैन्ध्यञ्जनयति येन चारित्र्यातिक्रमो जायते। धूमपानः फुप्फुसेभ्यः कष्टकरः। अतो द्यूत-मद्यधूमपानम् विजहीत : एवां परिहारः भवताम् सुखाकरिष्यति इत्युक्त्वा वचः संह्रियते मया॥

एवमुक्त्वा स स्वामी उपाशमत्। उपस्थिताः सभ्याः तस्य प्रतिष्ठाँ शुश्रूषां व्यतन्वन्! कियँतस्तस्य पुरतो मौलिना महीमगच्छन्। स तैराहृतँ प्राभृतँ पूजाञ्च अगृह्णात् । तेभ्यः आशिषँ प्रायुँक्त । जनसंबाधो व्यकीर्यत। स्व २ गृहङ्गच्छँतो जना अस्माभिः अस्य स्वामिनः उपदेशे संलग्नैर्भाव्यम् तस्य वाक्ये च

अद्धेयस् द्यौरपि पतेद्विदिति निश्चितिमकुर्वन्। ते सर्वे एकभावेन तस्य भूताः! स च तेषां शस्तो जातः सर्वे ते लोकास्तम् महयँति स। यदि वयम् अस्यानुकुर्युः दोषेभ्यो विमुच्य गुणान् धारयेम। सोऽमृतोपदेशेन अस्माकम् हितमावह त॥

एवम् तत्रभवान् स्वामी घनानन्दः आतिथेयेषु गृहेषु वसन् कुहचिज्जनैः परिविहितोपकार्येषु उद्यानेषु अध्युष्य कश्चिच्च परिवर्हदानेन देशमाति अध्युष्य पुनः कुत्रचिद् अटजे निवासं कृत्वा सत्यञ्च हितञ्च वाचमक्लीवतया प्रकाशयन् तेभ्यः सपर्योपहारस्य कनीयसोऽशस्य परिग्रहाद् वैखानसीं वृत्तिमाश्रित्य स्थानात् स्थानम् देशात्प्रदेशांतरं बम्भ्रमते स। स प्रतीच्येषु अग्रयायी तेषां भयोच्छेदाय अकल्पत॥ स्त्रीपुंसाः संशये नास्मिन् तिष्ठँते स। प्रतिदिनम् प्रातः मज्जनम् कृत्वा तमसः परमव्ययम् पुरुषम् ध्यात्वा लोकानामुपदेशाय महोपबर्हणिकम् पृष्ठतः आश्रित्य सोत्तरच्छदमासनमध्यास्त। स तेषां संशयान् समूल काषङ्कषान् स नाँश्च विकल्पपराङ्मुखान् व्यधात्॥ यत्र सोऽगच्छन्मङ्गलतूर्यनिस्वनाः सुखश्रवाः पथि व्यजृम्भँत॥

एकदा एको जनतायाः प्रतिनिधिमण्डलस्तमुपागम्यावोच :

देशोऽमुना एको विकटाक्षः समुत्पन्नः। प्रत्येकब्दकेः सामान्यतः प्रात्यहिकः आयो ह्रासमापद्यते। देशस्य जनसंख्यापि प्रतिवर्षम् न्यूना भवति। जना अधिकं विसाधनकर्तुं न प्रभवँति। अतस्ते दारान्न कुर्वति। ना स्ति तेषां सविधे पर्याप्तम् धनम् संतानस्य

स सर्वस्य पृष्ठङ्करेणामृशत् । सर्वानाशिषाशास्त ॥ तस्य भाषणं नितान्तं हृदिस्पृगभूत् । ब्रह्मचारिणः तस्योपरि निरवधिकां भक्तिमादधन् यतः सोऽपि ब्रह्मचारी आसीत् ॥

स भवान् प्रशांतगम्भीराकृतिः प्रायिकम् सौरत्वम-पुष्यत् । सर्वे विद्यार्थिनः उपकारभारावनताः परम-कृतज्ञताकुलास्तस्मै धन्यवादान् मुहुर्मुहुः व्यतानिषुः । भवताऽस्मु वचार्य वरं भाषितमित्यकथयँश्च ॥

कञ्चित् कालक्षणानन्तरं तत्रैव विद्यार्थिनामाश्रमाभोगे अनुद्युक्ते शिरः विश्रमितुम् निरचिनोत् । कररुहाग्रैः एको ब्रह्मचारी तस्य शय्यायाः ग्रंथीः निपुणं विश्लथ-यितुम् प्रायतत । सौख्यार्थम् प्रसारितपादस्तत्रभवान् शिष्यैः संवाह्यमानचरणो वीज्यमानो व्यश्राम्यत् । तस्यागमनवृत्तांतः सर्वतोऽपि नगरे प्रासरत् । तं आनेतुमेकस्याः चारित्र्यशोधकसँस्थायाः सदस्याः उपस्थिता आसन् । ततः स्वस्तिवाचनमभूत्तदा । ब्रह्मचारी आश्रम इत्यतः सँस्थामन्दिरं यावत् सर्वो मार्गः प्रसाधितः प्रोक्षितो नीरजस्कताम् नीतः प्रेक्षक-जनैरधिष्ठित आसित् ॥

दशभिः कलाभिः स तत्र प्रागत् स्थानप्रतिपत्तिम् लँभितः । सँस्थाया अन्यैः सदस्यैः प्रत्युद्यातः सो-ऽभिष्टुतचरितो यानादवरुह्य सँस्थामन्दिरं प्राविशत् । पाणिद्वयम् सँग्रह्य सर्वे तं नमश्चक्रुः ! तस्यांतिकम् सँप्राप्य उपग्राह्यश्च तस्य पूतचरणयोरंतिके विसृज्य सन्निपतनं तं उपदेशाय अभ्यर्थ्य जनाः पृथकस्थुः । न कोऽपि तत्र प्रणिपातलङ्घनम् उपचारातिक्रमम् वाकरोत् । सोऽयँतनीना सांधिषण्णादमिता वेलासीत् ।

दिनमणिः मान्द्यम् भेजे । सुघटितशरीरस्तत्रभवान् एकस्मिन् विष्टरं न्यमज्जत् यस्तस्यार्थे तत्र स्थापितः आसीत् । प्रदेशस्य तस्य प्रकृतिः स्वास्थ्यकरी नाम । समवेताः श्रोतारः करौ संपुटीकृत्य तमभ्यवर्तन्त । मुकुलितकरकमलः स तेषां हार्दिकभावानुरूपाम् कृतज्ञताम् प्राकाशयत् । स्तवं विदधाना जना दर्शनामृतेन स्वान्तरङ्गं संतोषयितुम् अहमहमिकया तं समुपययुः : 'भवान् शरण्यः शरणोन्मुखानामस्माकं कष्टजातविध्वंसनं हितं पथ्यञ्च चोपदेशङ्कर्तुं प्रभवतितराम्' । स भगवान् अंसात्स्रस्तं दक्षमुत्कृत्य यथाप्रदेशमानीतवान् । जनाश्च तं दृष्टिभिरापिबन्त स्थिताः तेषां शेषे कृष्णप्रवृत्तिः चक्षुरिव प्रविष्टा । समीपवर्तिगृहेषु वराङ्गनाः वातायनसन्निकर्षम् ययुः । तस्य वचांसि कर्णे कृत्वा अशृण्वन् । इत्थम् न्यगादीत् स उन्नतेच्छः चन्दनचर्चितललाटः सूनृतया गिरा —

मनोनिग्रहः सर्वगुणानामाश्रयः । ।शिष्टाचारस्य अभ्युन्नयनभावनया मनोनिग्रहोऽभ्यसनीयः । मनोनिग्रहेण नरः ब्रह्मलोकं समश्नुते । मनश्चाञ्चल्यत्यागः एव सर्वगुणानां निधानम् । मनोनिग्रहः दोषान् निकृन्तति । सिद्धिं ऋच्छति मनोनिग्रहेण पुमान् । जघन्यतमा दोषा मनोनिग्रहेण अपाकर्तुं पार्यन्ते । यदा मनो विषयेषु आसज्जते तदा अधोगतिं प्राप्नोति । मनोनिग्रहाभाव एव दुरत्ययः स्वर्गमार्गपरिघः । मनोनिग्रह एव सताम् भवोच्छेदकरः । मनोनिग्रहवान्नरोऽपथे न प्रवर्तते । मनोनिग्रहेणैव नरः आत्मानम् व्यसनाद् रक्षितुम् पारयति । आत्मा न ध्वंसयितव्यः । आत्मा व्यसनेषु न निपात्यः । व्यसनवर्जनाद् बहुतिथः

र्भिस्तान् वर्धयामास प्रोत्साहयञ्च । स कर्मासक्तिं नाहासीत् । स एकस्माद्विद्यालयाद् निमन्त्रणम् प्राप्तवानासीत् । तेषामभ्यर्थनां प्रत्यादेष्टुम् नाशकत् । देशवासिनाम् परिचर्यया आत्मनश्चारित्र्यमभ्यसनीयम् इत्येवासीत् तस्य निश्चयः । इममद्वितीयनिश्चयम् कृत्वा उद्युक्तमनाः स साधारण संशोधकानाङ्कतामत्यक्रामत् । देशेऽभूतपूर्वा विनिद्रतां समुत्पादयन्नेव आसन् तस्य समारम्भाः । स लवमपि न चचाल तस्मान्निश्चयम् नाहारयत् । सर्वां स्वसुखसंविधाम् तृणीकृत्य सोऽनवरतं बभ्राम देशस्य कोणे २ । कथम् न लोकाः हस्तौ संहृत्य तं शिरो नमेरन् साधुवादैः सम्भावयेरन् ? यत्र सोऽगच्छद् लोकानां नवव्रजाः तस्मिन्निपेतुः । यत्र च स व्याख्यानमकरोत् पुरुषैः नारिभिः संकुलाभूत्सा परिषत् । यन्नगरं सोऽगच्छत् तत्रस्थाः जनाः अहमहमिकया तस्मै प्रीतिपुरःसरं स्वागतं व्याहरन् । स च राजवत्पुरस्कृतोऽभूत् । तस्य गमनागमनवृत्तांतः ऐतिह्यपर्वेषु न्यस्ताक्षरोऽभवत् । जनास्तमुपासीदन् औपहारिकं आनयन् । आतायन-निष्क्रामितपूर्वकायाः तमवलोकयंति स्म स्वगृहेभ्यः॥

तस्य स्वागताय सम्भाराः आक्रियंत । छात्रावासस्य संशोधनं मार्जनम् कृतमासीत् । सारल्यनिचुलितया मार्मिकया सुबोधभाषया स भवान् ब्रह्मचारिणाम् कृते इत्थमुपदेशमदात् –

छात्रेषु गुरोः ऋणम् शिष्यते एव । गुरुशुश्रूषायां छात्रेण प्रमादो न कर्तव्यः । गुरोरुपकारा न गणयितुं शक्यंते । गुरोर्वाक्यपालत्वम् छात्रेण सदानुष्ठानव्यम् गुरोर्वचनपालने छात्रो न तन्द्रियात् । प्रातरुत्थाय

गुरुमभिवादयीत्। ब्रह्मचर्यमत्यन्त शास्त्रचितं व्यस्तः स्यात्। न कदापि वीर्यस्कन्दनं कुर्यात्। रेतो न स्कन्दयेत्। कामस्य बलिपशुः वीर्यघ्नो जनः। वीर्यनाशस्य परिणामा गणयितुम् न शक्यन्ते। इन्द्रियपुगम् स्वायत्तीकृत्य विस्तारयत ब्रह्मचर्यम्। वीर्यं न स्खलयत। अखण्डितब्रह्मचर्यपरिसेवनङ्कर्तव्यम्। ब्रह्मचर्यं न विलोपनीयम्। विषयकथाः विषयिजनसङ्गं विषयध्यानं परिवर्जयेत्। स्त्रीदर्शनएकान्तसेवनसँभाषणस्पर्शादिकर्मभ्यः पृथग्भूय ब्रह्मचर्यमाचरेत्। छान्दोग्योपनिषदि कनिष्ठमध्यमोत्तमभेदेन त्रिविधम् ब्रह्मचर्यम्। आयुषश्चतुर्विंशतिवर्षपर्यन्तम् कनिष्ठं ब्रह्मचर्यम्। आयुषश्चतुश्चत्वारिंशद्वर्षपर्यन्तम् मध्यमं ब्रह्मचर्यम्। आयुषोऽष्टचत्वारिंशद्वर्षपर्यन्तम् उत्तमं ब्रह्मचर्यम्। यावदायुः ब्रह्मचर्यं चरेत्। न किमपि तस्य तुलनां बिभर्ति। न किमपि तस्य साम्यं भजते। अनृज्व्या दृष्ट्या परकलत्रं नेक्षणीयम्। प्रभूतां मनोवशाच्चितश्शांतिमाप्नोति। इन्द्रियवक्रियां तथा कुर्यच्छेद् यथा सङ्कल्पेऽपि न सा सम्भवेत्। अङ्गनासेवनादिषु स न प्रसञ्जेत्। योषिद्भिः सह सङ्गतिं न कुर्यात्। परस्त्रीविमुखप्रवृत्तिमनः शास्त्रनिर्दिष्टवर्त्मना धर्मं भजते। न च विजिह्मलोचना अङ्गनास्तं विलोभयितुम् पारयेरन्। न चित्तयोनिस्तम् विपथगामिनङ्कर्तुम् प्रभवेत्। आयताक्षदलाक्ष सोऽभिभूतो भवेन्न चापि स्त्रीविधेयो भवेत् इत्येव ब्रह्मचारिणो नियमाः सततं हृदयग्राह्याः इत्येव स्व वचांसि अवसाययन् अहम् भवद्भ्यः प्रार्थये॥

भाषणस्यांते ब्रह्मचारिणः परिधाव्य तं परिवव्रुः।

जानुपातँ कुर्वंति स्म। तस्य चरणौ धृत्वा वन्दनां कुर्वंति स्म। तस्य लोकोत्तरपुण्यकृतः यशः कथयितुम् तत्स्तुतिपराणि गीतानि अगायन्। एवँ कर्णपरम्परया तस्य यशः श्रुत्वा जनास्तस्य पादमूलङ्गच्छँति स्म। स निखिलदेशे प्रथितमहिमाभवत्। सामोद्सुमनोआलिकाभिर्मण्डितस्य तस्य मुखाद् यत् किमपि केनचित् श्रुतँ तद् हृदि स्थापितम्। तस्य वाचि वल्गँति स्म सूक्तयः। सर्वं तस्य वाच्ये प्रवर्तते स्म। यद् ब्रह्माण्डस्य मध्यगम् न तदस्य ज्ञानचक्षुषो महात्मनोऽगोचरम् इति तेषां हृदि दृढा धारणासीत्। क्षितितले तस्य यशो विस्तृतमभूत्। तानि दिनानि यदः स प्रतिग्रहार्थम् याति स्म। इदानीं तु लोकास्तस्य कृते स्वयमेव उपहारान् आनयँति स्म। तस्य उरुकीर्तेः यशः इयत्तया परिच्छेत्तुम् नाशक्यत। तस्य चरितानि स्तुतिभ्योऽप्यत्यरिच्यँत। स महीयसो जनकायस्य पूजितोऽभवत्। अन्यः कश्चिद् नेता तस्य पादभागपि नासीत्। अयम् महत्सु महत्तमः। अतस्तम् ते बृहदाचार्याभिधानम् विदधुः। यथा नम्माल्वार इत्यस्य वास्तवँ नाम 'शठकोप' आसीत्। द्रविड़भाषायाम् 'नम्मा' इत्यस्य शब्दस्य अर्थो 'अस्माकम्' अस्ति; नम्माल्वार शब्दस्यार्थो अस्माकम् आल्वार अस्ति। तस्य भक्ताः प्रेम्णा तस्य नम्माल्वार इति नाम चक्रुः एवम् तस्य बृहदाचार्यस्य गुणास्तस्य नामानुसारिणो बभुः। 'बृहत्' इति शब्दः उच्चरितः एव तमगात्! परिचितपूर्वोधनानन्दो बृहदाचार्यः संवृत्तः। बृहदाचार्यस्य शिष्याणाम् संख्या क्रमशः इयतीं अवर्धत यदेक. सम्प्रदायः प्रातिष्ठ। द्रुतमेव स एको बृहत्कायः

सम्प्रदायः समजनि। अतस्तस्य नाम बृहत्सम्प्रदायो जातः। नामानुरूपः स सम्प्रदायः सर्वत्र प्रचलितो ऽजनि। स एव सम्प्रदायः एवं प्रथित उपचितश्चाभूत् जगतीतले तदनुयायिनाम् प्रपञ्चितेन वेगेन च उद्योगेन यत् परःलक्षा मनुष्यास्तस्यानुवर्तिनोऽभवन् अन्वहँ तेषां सँख्या प्राचीयत। सर्वमहान् सम्प्रदायः समजनि सः। अद्धमूलश्च सँवृत्तः॥

स गुणगृह्यो बृहदाचार्योऽशद्वानेन समाहृतस्य धनस्य उपयोगेन जीवनमत्यवाहयत्। लोकञ्च स्व मतस्थम् कृत्वा ऊर्जिताश्रयेण वचसः आर्यीः भणितीरुच्चारयन् देशभूतये प्रायसत् स्वमतञ्च अप्रथयत्। गच्छति काले भुवनप्रथितप्रत्ययः स वर्षीयसीं दशामुपासीदत्। आनतपूर्वकायः स मन्दमन्दम् क्रामति स्म। वार्धवयमुपपन्नस्य तस्य त्वक् शिथिलीभूता केशाश्च धवला जाताः। आयुषः क्षये क्रमेणासौ अजीर्यत करणवैकल्यञ्चाश्रयत्। जरोपहतस्य तस्य दँताश्चाजीर्यन्। यदासौ क्षपोऽश्नात् तेऽहृष्यन् अवेदयँश्च। ततः परं प्रपतितदँतोऽभवत् सः अङ्गञ्च गलितँ मुण्डञ्च पलितम्। किंचिदहर्गणे गते तस्य रसना प्रशांता। प्राणविसर्जनकालः समुपसन्नः प्राणा ऊर्ध्वमुत्क्रामँति स्म पुनस्तान् प्रतिपद्यते स्म। अन्ततः प्राणाः निरक्रामन्। पश्यतामेव स्वमतानुगानां स ब्रह्मभूयङ्गतिङ्गतः शरीरञ्च पञ्चतां प्रपन्नम्॥

व्याप्तसर्वदिक्को महानाक्रन्दो जातः अंत्याम् दशाम् उपगते आचार्ये तस्य शिष्याः वक्षःस्थलोपर्यीडम् हाहानिनादेन दिशो बधिरयँतः शोकजलाविलाक्षाः प्रभूतँ रोदनमकुर्वन्। सर्वतः प्रवृत्तो रोदनशब्दः

द्याम: जगतीतलम् । दारुणः क्षोभोऽभवत् । कालेन च तेषाम् भीषणोत्क्रोशो व्यरमत् ॥

हा धर्मचरणविगलितासुः नः आचार्योऽद्य स्वरणी यतोऽङ्गतिङ्गतः । यम् वयमवलम्बँते स स इदानीं कथा-शेषताम् नीतः ।' निखिलभुवनोपगीतकीर्तिना विप्रां योगम् ध्यायँतोऽतीववक्रवां दशामगमन् । 'न कार्यम् अद्य नः जीवितेन त्वया विना । कथम् नः संसार-समुद्रोत्तरणम् भविष्यतीति च व्यलपन् । कथँ वयम् तस्य नररत्नस्य पूजनीयचरितस्य उपकारान् गणयामः । स सर्वशास्त्रविचक्षणः सर्वशास्त्रविद्या-पारं लेभे । तादृशो नयमँडितः पँडितो न भूतो न भविष्यति । अद्य सोऽस्माकँ स्वामीत्यक्तदेहोऽविनश्वरं निर्झरं यशः प्राप । स लोकोत्तरगीतकीर्तिः शाश्वतँ ब्रह्म अभजत् । अपायिनीं तनूम् विसृज्य तस्येदानीं अनपायिपदोपलब्धि जाता । स उदारमतिर्महाबुद्धिः अद्य गतोऽपुनरावृत्तये । तस्य शरीरे वँधो नास्ति भूयः न यथेष्टगतिरभवत् । सोऽनघशीलो वँधच्छेदम् विधाय मोक्षं लब्धवान् । इत्थम् बहु विलापञ्चक्रिरे ॥

तदा तैः स्वामिनो विग्रहः उत्तरविधेरनुष्ठानाथ गजदँतासने निधाय स्नापितो धूपितो गँधादिरूषितः । संस्कारोत्तरं दहनाय च सज्जीकृतः । तँ पूतदेहम् शवपीठिकाधिष्ठितम् श्मशानभूमिश्चानीय उत्तर-क्रियामँत्रान् पठित्वा पावकसंस्कारं विरचितवँतः । प्रभूतैः शुष्ककाष्ठैः चिताम् परिकल्प्य तच्छरीरम् तत्र प्रक्षिप्तवँतः । महता तेन चिताग्निना दह्यमानकलेवरः स भस्मचयो भूतः ॥

यावदद्य स्थिरा शांतिः व्यराजत । आचार्ये गते

तस्य भक्ताः तस्य लक्ष्यानंति स्म। वर्षानंतरं वृहदाचार्यस्य मृत्युदिने तस्य स्वर्गारोहणोत्सवङ्कर्तुं एको मेलकः संयोजितः। महान् जनसम्मेलस्तत्र सम्भूतः। महान् आडम्बरस्तत्र अदृश्यत। धूमशकटेभ्यस्तस्य मतानुवर्तिनः स्थानात् २ गन्तुमारब्धाः। महान् कलकलो जातः। गतवयसां वृद्धानां यूनां कुमाराणाञ्च महान् संवाधो दृष्टिपथम् याति स्म। समुत्सुकास्तस्यानुयायिनो न कुत्रापि मार्गे प्रयाणभङ्गमकुर्वन्। एतद्दिनम् ते आसंवत्सरं प्रतिपालयंति स्म। मांसाशिनः शाकभोजिनोऽविप्लुतब्रह्मचारिणो गृहमेधिनो भङ्गापायिनो धूमपानासक्ताः श्मश्रुलाः मुंडितकूर्चाः विदेशीयाकल्पम् परिहितवंतोऽनेकविधा लोकाः येषामाक्रांतपांसुलमार्गे आगच्छतामधिकाधिकम् स्फुटीभवति स्म तत्र समवेताः॥

तदा तस्मिन् मेलके ब्रह्मचारिणामेकः संग्रहो गृहाश्रमिणाम् निवहस्य सम्मुखे उपस्थितः तांश्च उपालब्धुम् प्रवृत्तः। यूयम् वृहदाचार्यस्य मते स्थिताः आचार्येण तु अष्टचत्वारिंशद्वर्षम् यावद् ब्रह्मचर्यव्रतपालनमुपदिष्टम्। परंतु युष्मासु एकैकः एतावत्यामेव आयुषि षट्पंचकानां जनयिता जातः। किमिदम्?

ते ऊचिरे – आचार्येण तु रूपष्टयितं यद् गृहाश्रमः सर्वाश्रमानवलम्बते।

तदा ते ब्रह्मचारिणः ऊचुः – आचार्यस्तु स्वयमेव ब्रह्मचारी आसीत्। स कथमेवमुपादिशत्?

तदा ते गृहस्थाः प्रोचुः यदि यूयम् नास्मानपेक्षध्वे तदा वयम् न युष्मानुत्पादयिष्यामः।

तदा सर्वे ब्रह्मचारिणः समानीतकरपुटाः एक-

स्वरेण प्रोचुः — मैवम् २ भवँतः।। अस्माकज्ञातिलोपम् यास्यति ॥

एवँ स विवादः शाँतिम् यातः समाधानश्च भूतम्।

अन्यत्र केचिच्छाकभोजिनो भोजनालये कांश्चिद् गुरुकायान् सन्नद्धगात्रान् माँसमदतः दृष्ट्वाऽवदत। 'हन्त भो किमिदम् अनर्थम् क्रियते युष्माभिः? युष्माभिः वृद्धाचार्यस्य उपदिष्टाः सिद्धांताः उरसि-कृताः। आचार्येण तु चणकाद्यन्नम् शाकशष्पमेव उपजीव्यनामि.त पिशिताशनम् अत्यँताय परिवर्जितँ कथमिदम् मांसम् रुच्यमापन्नम् युष्माकम् मनसः ?'

ते प्रत्याहुः — आचार्येण तु खाद्यसमस्याँ समाधातुँ मांसादः स्पष्टतया विहितः। कथम् यूयमसत्यवचनेन आचार्यम् लाञ्छथ ?

ते चाभणन् — आचार्येण तु अभिहितँ निरपराधो कृमिकीटपतङ्गोऽपि न हिंसितव्यः। कथम् यूयम् निरपराधिनां वधँ विधाय चर्म विदार्य हिंस्रा भवथ ?

ते चागदन् — कृमिकीटाः नास्माकँ भोज्यपदार्थाः। अतः आचार्येअ इत्थम् कथितँ भवेत्। परंतु इमे तु अस्माकँ खाद्यपदार्था। तैरभ्यवहार्यमुपकल्पनीयमेव

आचार्येण तु आज्ञप्तम् यदि कश्चिन्निरपराधिनम् कमपि हिंसेत् स दण्डमर्हति। स दँडयितव्यः इति कथयित्वा ते सर्वे तान् आपेतुः। सर्वेऽन्योन्यम् अयुध्यँत। एकस्य शिरः उच्छिन्नः। अन्यस्य नेत्रम् स्फुटितम्। तेषां वपूँषि मिथः समाहतानि अभवन्। सर्वे ते पादत्राणादिभिरकलहायँत : एकस्य च गँधवहा चिच्छिदे। अन्यस्य चक्षुषी समुत्पाटितेऽभवताम् परस्परं ते मुष्टिभिराघ्नन्। अन्योन्यस्य मुखे न्यष्ठीवन्

तुमुलञ्च बहुविधमकुर्वन् ॥

अन्यत्र एकस्मिन् स्थलेऽन्या एका घटना अघटिष्ट।
एको वृद्धः प्रानुयायी एकं मदाघूर्णितनयनम् भङ्गमदसंमूढम् दृष्ट्वा नासिकां विमोच्य उपालभत। किमर्थम् त्वम् मदिरामपिबः । आचार्यः तु बुद्धः विलुम्पकमिदम् मद्यपानं सर्वथा प्रत्यषेधत्। त्वम् तु मद्यपानं नाहासीः । कथं त्वम् सुरापानं नारहीः ? इदं ते कर्म आचार्यस्य अनुक्तदुक्तानि वचांसि अतीयते ॥

स उत्तरं दत्तवान् – आचार्येण तु धर्मभावनां समेधयितुम् मद्यपानं स्पष्टम् निर्दिष्टम् । न ममेदं कर्म तस्योपदेशं विरुणद्धि ॥

स पत्युवाच – आचार्यस्य कथनम् अवितथम् अविपरीतं वेद्यम्। आचार्यस्य उपदेशस्य न त्वयमर्थः त्वम् सुरां पीत्वा संरक्तनयनो यत्र तत्र भ्रमेः। प्रातः संध्योपासनासमये यदि त्वं किञ्चित् सुरां सेवित्वा ध्यानमाविशेः तर्हि सुष्ठु भवेत्। समाधि-अवस्था च सम्यक्त्वेन आनीयेत। इत्येव आचार्यस्य कथनस्य आशयः॥

प्रातरेव न प्रभुध्यानसमयः । प्रभुध्यानम् तु अहर्निशमनुक्षणं संततङ्कर्तव्यम्।

एकः तु मदिरां परिषेव्य मदाभिभूतो धूलिधूसरिताङ्गस्तत्र पथि पतितः।

'स भूमध्यस्थापिताचलदृष्टिः प्रभुध्याननिलीन एव वर्तते !?'

'यदि एतादृशा भक्ताः सर्वेऽभविष्यन् तदा सर्वे पन्थानस्तैरवरुद्धा अभविष्यन् न कोऽपि अश्वरथो मरुत्तरो यानं वा लङ्घितुम् पारयेत्' इत्युक्त्वा तं मद-

मूर्छितञ्जनं यथाऽपनेतुम् प्रावर्तत।

'मा तस्य समाधिविच्छेदो भूत्। किं त्वमज्ञवद् धूर्तवद्वाचरसि।'

'अलङ्कटुभाषितया। किमेवङ्कठोरभाषणम् क्रूरवचनानामुपयोगञ्च करोषि। विरमातः परं वाक्पारुष्याद् यदि सुखं नऽभीप्सितम्' इत्याह तं क्रूरदृष्ट्या विलोकयन्।

किं त्वम् वक्रदृष्ट्या मामपमानयसि इति प्रोच्य चपेटेन एकेन तस्य मुखमाहन्। स तु कशया तस्य शिरोऽताडयत्। तदा सर्वे सुरापाः भङ्गापायिनो ये पुष्कलं भङ्गं पीत्वा पानमदसंमूढाः इदानीं यावत् प्रसन्नीभूय ननृतुः उत्पेतुः जगुश्च एकत्र भूत्वा अन्यैः सह युयुधिरे। क्रियताम् चक्षुर्विनष्टम्। नासिकाछेदौ भूतौ रुधिरस्रावौ जातौ महद् वैशसञ्च सम्भूतम्। एकः आस्यैन रुधिरधारां वमन् पञ्चत्वम् अवाप। अन्यस्य अभिघातक्षतशरीरस्य प्रभूतो रक्तनिस्यन्दोऽजायत। एको मद्यपो रोषाद् उद्वृत्तनयनोऽन्यम् मुष्टिनिष्पीडितग्रीवम् उद्ग्रीवतासुमकरोत्। अन्यः संमूर्छत्क्रोधवकारः स्वकीयावलेपमूर्छितं अपरं मुष्टिनिष्पेषेण अक्षिणोत्। उन्मत्तश्चैकः प्रज्वलित क्रोधो एकमपरम् अतिपरुषं भाषमाणः सततप्रहारैः जर्जरितकलेवरञ्चकार। स च इत्थम् प्रहृतः प्रक्षुभित संधिबन्धो गात्राणामनीशः संवृत्तो दुःसहव्यथया कृतपरिसर्पणो तस्मात् स्थानादात्मानमपवाहितवान्। एतादृशो द्वयोः पक्षयोः प्रावर्तत संग्रामो यत्तेऽन्योन्यस्य गलच्छेदेऽपि किल्बिषम् नालोकयन्। हस्ताहस्ति मुष्टिमुष्टी दण्डादण्डि केशाकेशि ते संग्रामम्

अकुर्वन्। परां भ्रुकुटिमाबध्नन्तः कोपानलज्वाला-मालावलीकवलीकृतकलेवरास्ते अन्योऽन्यस्य शिरः कायात् पृथक्कर्तुम् उदयुँक्त। द्वयोः पक्षयोः बद्धयुद्धो बभूव। बहवोऽक्षिविकलाः स्रुपन्नाः। बहवो मुखम् व्यादाय मृताः। सर्वं भूतलम् प्रसृतरुधिरधाराप्रसेक-पिच्छिलम् समजनि। युद्धोऽयम् व्यरमद् यदा मदिरापायिनो मदिरोन्मादेन मूर्छाम् प्राप्ताः। अन्ये च तैः प्रहृता निःसंज्ञाः जाताः। अन्योऽन्यमालिङ्गन्तः सर्वे ते तत्र अध्यशेरत॥

यदा इदम् युद्धम् प्रवर्तितमासीत् तदा मेलकस्य एक-स्मिन् कोणे द्वौ पुरुषौ इममेव अर्थम् स्फुटीकर्तुम् उदयुँक्ताम् –

'अयि कथम् त्वम् मद्यम् पीत्वा धर्ममेलकम् आगतोऽसि? किमपि ह्रीयँतणाम् न अश्नुषे।'

'आचार्यस्य आदेशोऽयम् यम् अहम् पालयामि। वीरतापादनाय सुरापानम् आवश्यकम् इत्याचार्यस्य वाक्यम्'।

'वीरता तु रणप्रयाणेऽपेक्ष्यते न तु अधुना। किमिति मूढचेतनवद् आचरसि?'

स तस्य 'मूढचेतन'शब्दस्य प्रयोगेण भृशम् दुरमनायत।

वीरता तु सर्वत्र एव अपेक्ष्यते। वीरताम् विना कथम् त्वादृशाः वाचाटाः वशम् नेयाः?' इत्युक्त्वा एकम् तलप्रहारम् तस्मै दत्तवान्।

प्रावर्तत्च तयोः द्वंद्वयुद्धम्॥

एकः श्मश्रुलः एकेन मुण्डितकूर्चेन सह विवद-मान आस्त –

'कथं त्वम् आनाभिविलम्बमानसान्द्रकूर्चोऽत्र आयातः यदा आचार्यः शारीरिकस्वच्छतापादनाय केशरक्षणं प्रत्याख्यातवान् ?' इत्यपृच्छत्।

'तत्पूज्यपादेषु दोषमारोपयितुम् नोचितम्। अन्यथा गृहीतं त्वया आचार्यस्य वचः। आचार्यस्तु राजदण्डपरिहाराय श्मश्रुवर्धनम् स्पष्टमुद्दिष्टवान्। श्मश्रुलो जनः किमपि विधानभङ्गं कृत्वा कूर्चम् उत्त्वा अभिज्ञानाभावाद् राजदण्डाद् आत्मानं रक्षितुम् पारयति।'

'न तथैवेदम्। मुण्डितकूर्चस्तु कथमपि हस्तात् स्रंसेत्। परंतु त्वादृशम् तु कूर्चेन गृहीत्वा रक्षागृहम् नयन्ति' इत्युक्त्वैन गाधं तस्य कूर्चमाकर्षत्। श्मश्रुलेन तस्य वक्षसि पार्ष्णिः दत्तः। तदा द्वावेव विग्रहानुष्ठानं कृतवन्तौ। दूरापसरणं कृत्वा भूयोऽपि ललाटपट्टाभ्यां अन्योऽन्यमभिहतवन्तौ॥

अन्यत्र इदम् दृश्यमभिनीतम्।

कांचिद् वृद्धाचार्यस्य भक्तान् उद्दिश्य केचिद् उक्तवन्तः –

'कथं यूयं धूमपानसुखमनुभवथ यदा आचार्येण धूमपानं सर्वथा प्रतिषिद्धं तमाखूत्यागश्चादिष्टः ?'

'आचार्यस्तु धूमपानं मिथः ऐक्यापादनाय विहितवान् स्वबुद्धिमत्ताय। प्रत्ययश्च सर्वेषां हृदयेषु स्थापितवान्। यूयङ्कथमाचार्यं मिथ्या संदूषयथ ?' इति ते प्रत्यूचुः।

तदा तेषु कश्चनोऽसार्पितलम्बहारः प्रोक्तवान् –

यादृशे तादृशे जने उपदेशोऽपि न दातव्यः। अन्यथा गृह्यते। अहमपि तत्र व्याख्याने उपस्थितः

आसम्। आचार्यस्तु धूमपाननालिकाप्रयोगमादिष्टवान्। तस्याः सर्वैः समानप्रयोगेण ऐक्यभावना उदेति दृढतरा भवति च। यूयं तु पृथक् २ सिगरटेन धूममाकर्षथ। यथा एके गृहे समानभोजनपानाः भ्रातरः प्रेम्णा निवसन्ति परंतु विभक्ताः सन्तोऽन्योऽन्यविद्वेषपराः जायन्ते तथा यूयमपि कलहङ्करिष्यथ॥

'कलहस्तु धूमपाननालिकाप्रयोगेण संभाव्यते। धूमपाननालिका पर्यायेण एकैकमुपगच्छति। यदि कश्चिच्चिरायते तदा अन्ये व्याकुलाः भवन्ति। वयम् तु स्वम् २ सिगरटमाकर्षामः सुखगोष्ठीं च कुर्मः' इति ते प्रत्यब्रुवन् –

इत्थम् तान् विवदमानान् दृष्ट्वा एकः पार्श्वस्थनोऽब्रवीत् – आचार्येण तु अभिहितं धूमपानं फुप्फुसेभ्यः कष्टकरम्। परस्परं विवदमानानां भोच्चैः वाक्कलहम् कुर्वताम् युष्माकं फुप्फुसेभ्यः कष्टञ्जायते न वा?

'जायत एव' ते सर्वं प्रत्यवदन्।

'परंतु अस्माभिस्तु धूमपानं न कृतम्। कथमस्माकं फुप्फुसेभ्यः कष्टञ्जायते?' सिगरटप्रयोगमकृतवन्तोऽब्रुवन्।

तदा तेन जगदे – सिगरटपानं कुर्वताम् मुखेभ्यो निर्गतो धूमो वायुना संमिश्र्य युष्माकं फुप्फुसेष्वपि प्रविशन्ति। अतो युष्माकमपि धूमपानञ्जायत एव। अतो युष्माकं फुप्फुसेभ्यो जायते कष्टम्।

तदा ते सर्वं व्यरमन् धूमपानात्॥

मेलकस्य अन्यस्मिन् भागे विदेशीयवासं परिहितवद्भिः अन्योऽन्यमुद्दिश्य भूगोले प्रचलिताः विविधाः

भाषाः प्रायोजि याः केनापि नावोधि।

तदा केचिद् अन्ये यैः स्वदेशीयरीतिः न त्यक्ता प्रोचुः 'किमर्थम् यूयँ मिथ्या अनुकुरुथ परदेशीयान्? ये हि स्वदेशीयभाषामेवँ प्रोत्सहँति ते हि आचार्यमते सम्यक्त्ववँतो सर्वोत्तमाः। देशे एकतापादनाय प्रभवँति न तु युष्मादृशा ये देशांतरीयमेवमङ्गीकुर्वँति देशांतरीयभाषया प्रजल्पँति याँ केऽपि नावबुध्यन्त॥ किमियम् युष्मभ्यम् न ह्रेपणः!'

'आचार्येण तु अस्मभ्यमुपदिष्टम् 'विदेशीयवासम् परिधत्त। देशांतरीयवाच गृह्णीध्वम् : एवँ विदेशीयैः सह वाणिज्यवृद्धिः भविष्यति देशश्च समर्धिष्यति।'

'यदा अस्माभिः स्वदेशभाषामेवो एव त्यक्तौ तदा अस्माकमेकता विनँक्ष्यति वयञ्च गर्त्तं पतिष्यामः। यदि वयँ सर्वे स्वदेशीयवाग्भेषौ स्वीकरिष्यामः तर्हि अस्मासु एकता संपत्स्यत एव धनागमोऽपि भविष्यति यदा अस्माकँ भाषा भेषः लुप्तौ तदा अस्माकँ समूलो-च्छेदो जातोऽस्माकमस्तित्वमेव नष्टम्। तदा स्वर्गेणापि किम्?

'स्वनाशँ विना कदाचित् स्वर्गो लभ्यते। मृत्वैव सर्वे लोकाः स्वर्गङ्गच्छँति। जीवन्नपि कश्चित् स्वर्गङ्गतः यूयमद्य वृहदाचार्यस्य स्वर्गारोहणदिवसे उत्सवँ कुरुथ अद्य स मृतः। मृत्वा एव स स्वर्गङ्गतः न तु जीवन्।'

'यदि मृत्वा सर्वे स्वर्गं यांति तदा वयमपि युष्मान् देशद्रोहिणो मारयित्वा स्वर्गं प्रेषयिष्यामः।' इत्यभ्यधुः ते प्रबुद्धमन्यवः।

'यूयम् केऽस्मान् मारणाय? अनर्गलम् वचनम् उच्चार्य महामहिमानो भवथ' दर्पमुपेत्य ते कुपिताः

समगर्जन्।

तेषां परुषमुखरता व्यजृम्भत। गालीप्रदानमारभन्त। तदा तेऽन्योन्यैः सह रणमगच्छन्। समुच्छृङ्खला भूत्वा कलहे निलीनाः अभवन्। एकस्य चरणं शोथ युतम्। एकस्य करशाखाः विच्छिन्नाः। बहुसंख्याका व्यङ्गता गतनासिकाः अभवन्। किं तु विकृताकृतयः समजायन्त। लगुडप्रहारैः जर्जरीकृतावयवा अभवन्। प्रचुराः मृताश्च। केचिद् आहवनिपुणाः स्वपक्षान् सँगृह्य मुष्टिजानुपादघातैः प्राहरन्। दोर्वीर्यगर्वेण समुल्लसद्भुजाटोपेन पटुपराक्रमशालिनः परपक्षान् आक्रामन् बहुविधम् सँकुलञ्चाकुर्वन्। ऊनमधिको बबाधे॥

जनौघेन सङ्कीर्णः स मेलकः पितृकाननं भूतम्।

इत्थञ्चानन्दस्य बृहदाचार्यस्य स बृहत्संप्रदायो मतभेदप्रादुर्भावात् तस्य मृत्योः वर्षानँतरं लोपङ्गतो यथा घनस्य रौद्रगर्जितम् श्रुत्वा क्रोधेन भुजङ्गकुटिला कृत्या ज्वलँत्याः ह्रादिन्याः तस्मादपि भीषणानन्तरं मकड़कड़ाशब्दङ्गर्जितं वर्षानँतरं ह्यमेव लोपङ्गच्छन्ति॥

... *... * ... * ... * ... * ... * ...

एको बटुकश्चत्वारिंशतँ जालपादान् (आडीन्) प्रत्यहम् भ्रमणाशनपानाय वनम् नयति स्म। एकदा अरण्ये भ्रमदाडिषु एकया आड्या अण्डविमोचणम् कृतम्। एकः ऐङ्कः अण्डम् चञ्च्वादाय खमुत्पतितः बटुकः एतद् दृष्ट्वा ऊर्ध्वाननः आकाशे प्लवतस्तस्य काकस्य पृष्ठतो भूमिस्थलेऽधावत्। तँ पृष्ठतोऽनुसरंतँ दृष्ट्वा कोऽपि पांथोऽपृच्छत् –

किमर्थम् त्वमस्य वायसस्य पश्चाद् धावसि ?

बटुकोऽब्रवीत् – यदा स काको द्रुमशाखोपरि स्थित्वा तमण्डँ चञ्च्वा भक्षयिष्यति द्रवश्च स्रोष्यति तदा अहम् अधः स्थित्वा सर्वम् तँ द्रवम् चातकः पयोविन्दून् यथा मुखेन ग्रहीष्यामि निगलिष्यामि च

पांथः – सपदि स काकः उपरिष्टात् पुरीषम् उत्स्रक्ष्यति यदा तदपि त्वन्मुखे पतिष्यत्येव ॥

— ... * — ... * — ... * — ... * —

ॐ

# शिलालेखशासनम्

एम. ए. परीक्षम् उत्तरीतुम् मम पाठ्यविषयः संस्कृतमेवासीत्। अहं संस्कृतमादाय एम. ए. पदवीमधिगतो। संस्कृते च भाषाविज्ञानं ऐच्छिकेषु अध्याप्यविषयेषु अंतःकृतमासीत्। भाषाविज्ञानं, वेदान्तः, मिताक्षरा इत्येतेषु त्रयेषु एकः परीक्षोत्तरणेऽङ्कितव्यमासीत्। अहञ्च एम. ए. संस्कृतपरीक्षोत्तरणाय भाषाविज्ञानमधीतवान्। लघीयसो भूयसो वाङ्कान् लब्ध्वा एम. ए. कक्षाञ्च उत्तीर्णवान्। वेदान्तेन तु बुद्धिव्यायामो भविष्यति नान्यत् किंचित्। मिताक्षरा ज्ञानमापाद्य अहम् उत्तरवादिवृत्तिमुपजीवितुम् नालम्। विधिज्ञवृत्तिमुपजीवितुम् व्यवहारपांडित्यम् पूर्णतया सम्पादनीयं मया। तदर्थम् एल. एल. बी., बी. एल. इति वा परीक्षा उत्तरणीया। तदा एव देशविधानं सम्यक्तया ज्ञातुम्, विधिज्ञत्वेन जीवनयात्रां कर्तुम्, लोकसभादेः सदस्यो भूत्वा विधानानाम् विवर्तनम् निराकरणं निरोधो वा कर्तुम् पार्यते। अतोऽहम् भाषाविज्ञानमेव अध्यैषि। कस्मिंश्चित् संग्रहालये राजनियुक्तिमपि आसादयेयम् इत्यपि आसीद् मम बलवती आशा। भाषाविज्ञानपरीक्षायां द्वे प्रश्नपत्रे। एकस्मिन् प्रश्नपत्रे प्राचीनकालिकताम्रपत्रलेखशिलालेखादिपठनं अञ्जसा शुद्धतया च कर्तव्यम्। अन्यस्मिन् प्रश्नपत्रे प्राचीनताम्रशिलालेखविहितवतां राज्ञां राज्यकालस्य इतिहासज्ञानं परीक्ष्यते॥

भाषाविज्ञाननियमानाम् सङ्क्षिप्तप्रकारेण झटिति प्रबोधनाय ताम्रदेखपत्रलेखानां सम्यक्तया अवबोधनाय संप्रवृत्तेषु ग्रंथेषु यथम् इमे कतिचिन्नियमाः शिक्षापिताः। प्राचीनलेखेषु श इत्यस्य अक्षरस्य स्थाने च प्रयुज्यते स्म ध स्थाने थ' ख स्थाने च, व स्थाने ब, ञ स्थाने श, द्व स्थाने द्ध, व स्थाने च प्रयुञ्जते स्म। अनुस्वारलोपः, दीर्घ ई ऊ मात्रा स्थाने ह्रस्व इ उ मात्रे प्रयुज्येते स्म ॥

इमे नियमाः 'एपिग्राफिया इण्डिका' नाम्नि ग्रंथेऽपि लिखिताः संति। अस्माकम् शिक्षा आङ्गलशासने आङ्गल्याः वाचो दूरीकरणेन एव संपाद्यते स्म। यदा शासनस्य पत्रप्रेषणविभागेऽधिकारीनियोगकरणस्य अवसरः सञ्जातस्तदा अहम् आप्तोपाधिको राजनियुक्तो भूत्वा जावालिनगरे पत्रप्रेषणकार्यालये उच्चाधिकारीपदमलङ्कर्तुमागच्छम्। तत्र च प्रतिदिनम् लोकैः प्रेषितानां पत्राणां वाचनेन अहं तथ्यमिदम् अवागच्छम् यद् इतः त्रिंशत्तमे योजने अस्त्येकः पर्वतो यो लताश्लिङ्गितचूतैः वल्लीपरिणद्धद्रुमैः परिवृतपार्श्वस्तिष्ठति बालातपरक्तसानुः यस्य पृष्ठतश्च उच्चोच्चश्रेणयो ग्रामगिरिनितम्बानां संति। स च अद्रिः प्रत्यंतपर्वतानां शृङ्गाणि अधरयन् अभ्रङ्कषम् उच्छ्रायं बिभर्ति स च सनिर्झरोद्गारो विटपगुल्मांतरितविग्रहः प्रभञ्जनस्य तीव्रवेगेन आन्दोलितपादपसमूहसूत्कारस्वनेन पूरयति दिगंतरालम्। यस्य च गगनचुम्बिविशालशाखिसंकुले दुस्तरारण्ये आप्रभातात् आसूर्यास्तमनम् पतत्रिणः किलकिलायंते। तोयदागमे यस्य च अभ्रंलिहः शिखरः पयोमुचां पंक्तिषु अस्पष्टा-

कृतिः हिमागमे हिमधवलितो स्पष्टतरं विभाति यथा चुल्हौ तप्यमानजलं वाष्पं मुञ्चद् अप्रतीयमानाकृतिः शीतो भूत्वा स्पष्टतरं दृश्यते। यस्य च प्रस्रवणजलम् हिमनिग्रहे हिमविवर्जितस्य तस्य हिमजलेन संमिश्र्य तम्बानदीरूपेण परिणतो निम्नप्रदेशे उच्चभिच्चयोः वर्षाजलानि वहत् स्फुटफेनराजैः दक्षिणोदन्वतो जलौघे निपतति! उत्कलापाला व.हगाम् केकारवो यस्य च स्वनोद्गारीदरीषु प्रतिध्वनन् अम्बुदानाम् अम्वालकगर्जनध्वनिना एकीभूय समस्तांतरिक्षङ्कम्पय-ति। तस्य च शैलाग्रम् उत्खाय शिखरे निखातोऽस्ति एक उच्छ्रायवान् अभ्रंलिखी स्तम्भः। यस्मिन् नाग-सेनमहाराजेन उत्कीर्णिताः सँति केचिच्छिलालेखाः ये रुचिसँवर्धकाः कल्याणकारिपरंपरागतशाश्वत-भावभूषिताः परमुपयोगितामावहँति। उत्तरङ्ककुभँ गृहीत्वा गच्छन् प्राप्नोति गिरेस्तटम्। ततः पर्वता-रोहणङ्कर्तव्यम्। कियद् दूरं कलृतेन सोपानपथेन गन्तव्यम्। अपरतः एका संकुचिता वर्तनी यस्याः सूक्ष्मरेखा नगोत्सँगे सर्पती दृश्यते शिलानां विभङ्गैः तत्र नयति। तस्य प्रदेशस्य वायुजलमपि अनुकूलम् लोकानाम्। इतः किंचिद् दूरं सरलो मार्गः पश्चाद् विषमा भूमिः यतोऽहम् एम. ए. श्रेण्याम् पठन् शिलालेखानाम् अध्ययने वैदग्ध्यम् प्राप्तवान् आसम् अस्माकम् शासनस्य सर्वम् विधानशास्त्रम् प्राचीन-व्यवहारप्रणालीं आधारीकृत्य एवं तिष्ठति इत्यपि न आसीद् अविदितचरम् प्राचीनैतिह्याध्ययनशीलस्य मम अतोऽहम् तम् स्तम्भम् प्रत्यक्षयितुम् तत्रोपदिष्ट नियमानाम् अनुसरणेन निजजीवनम् कृतार्थयितुम्

समुपजातकौतुकोऽभवम्। अद्यावधि ताम्रफलका-
नां शिलालेखानाञ्च प्रतिच्छन्दकमेवाद्राक्षम्। चित्रपटे
निवेशितानि एव ताम्रपत्राणि शिलास्थूणाश्च मया
दृष्टानि ; न वास्तवानि तानि। अतस्तान् द्रष्टुम्
मनसि मे बुद्धिरभूत्। प्रस्तरे उत्कीर्णानि अक्षराणि
यथा लाङ्गलकृष्टा भूमिः। हलकृष्टा भूमिः यथा जीवा-
नां शरीरपुष्ट्यै कल्पते तथा उत्कीर्णाः शिलालेखाः
जनानां आत्मोन्नतये कल्पेरन्। यथा सुकृष्टायाः भूमेः
प्रतिलेख्यदर्शनेन न नश्यति कस्यापि क्षुधा एवञ्चित्र
लिखितानां शिलास्तम्भानां दर्शनेन नातृप्नोत् मम
अंतरङ्गम्॥

यद्यपि अमानुषगस्यं तत् स्थानं मार्गोऽपि अति-
विषमः न किमपि यानं तत्र गच्छति स न लोहपथ-
सञ्चारिवाष्पशकटीनां तत्र गमनं दीर्घोऽध्वा गंतव्यः
पादचारेणैव तथाप्यहम् धैर्यमपरित्यजन् अध्वश्रम-
खेदमगणयन् प्रवृत्तोऽभूवम् तद्यात्रायै ; यद्यप्यहं
अश्वे पर्याणमारोप्य मुखे खलीनं दत्त्वा पादधान्योः
पादौ न्यस्य प्रग्रहांश्च हस्तेनादाय वाजिनं प्रेर्य गन्तुम्
अशक्नवम् परंतु पर्वतसमारोहणसमयेऽश्वकस्य हस्ते
समर्पयेयम् इति न व्यजानाम्। अश्वम् संयम्य यदि
गच्छेयम् अश्वम् छिन्नबंधम् कृत्वा कोऽपि मुष्णीयात्
अतोऽहम् पादचारेणैव यात्राङ्कर्तुं मनो न्यधाम्॥

निदाघर्तुरेव अस्यै यात्रायै उपयुक्तः समय आसीत्।
प्रावृषि यत्र तत्र मार्गे साटोपानां मेघानां वृष्टिसेकेन
पर्याविलानि उदकानि पदयात्रां रुन्धंति। मार्गे एका
नदी आसीत्। निर्वृष्टमेघेन गाधा सरित् न येन कूलम्
भित्त्वा नदीजलं मार्गे प्रसारयेत् इत्यपि भीतिमापन्नो

ऽहम् ग्रीष्मर्तुमेव उपयुक्तं सन्नं निरचिनवम् यात्रायै शरदि-ऋतौ सति हिमपाते गिरिकूटमिदम् दुरतिक्रमं भवति । शरदि च गुरुशय्याभारवहनमपि न सम्भवति । शुचौ ग्रीष्मार्कप्रतापसंतप्ततनुरपि जातस्वेदः क्लिश्रमस्यपेक्षः क्वचिदेक-शाखासनाथस्य अतिघनतरपल्लवच्छन्नपादपस्य मूलमुपविश्य विश्राम्येयं तृट्परीतश्च क्वचित् कूपतड़ागे पिपासापनोदमपि कुर्याम् इत्याशया देशान्तरं पद्भ्याञ्चरिष्णुः निदाघप्रयाणं निरचिनवम् ॥

शिशिरापगमे आगतो निदाघः । कार्यालयाद् अवकाशं लब्ध्वा त्रिचतुरैः प्रयाणकैः त्रिंशतक्रोशमितमध्वानमतिक्रमितुम् निश्चयम् कृतवान् । कल्ये यदा भानुरुदयच्छत् तमश्चापागच्छत् शकुन्तयश्च क्वणंति स्म उत्थाय यात्रासमवेषभृद् अहम् पद्भ्याम् अचलम् । रविः दिनमुखानि विमलयन्नास्त । ग्रीष्मोऽष्मणा संतप्तः प्रच्छायशीतले तरुतले विश्रम्य पुनः प्रयाणमारब्धवान् । क्वचिद् रजको वस्त्राणि निर्णिज्य अरस्यत । सस्यलावाः कृषीवला दात्राणि आदाय क्षेत्रं यांति स्म । आभोगवत्सु निकर्षणेषु परिक्रमन् शाद्वलानि क्षेत्राणि हरितः शाखिनः स्यन्दमाना अपश्च पश्यन् श्रमखिन्नः कथङ्कथमपि आत्मानमाकर्षम् ! मुष्णन्निव चक्षूंषि चण्डमतपत् चण्डरश्मिः । क्षणम् श्रमं मोक्षयितुमहम् प्रच्छायशीतले प्रदेशे उपविश्य कर्कशविहारसम्भवं स्वेदं प्रमृज्य दिक्षु चक्षुः न्यक्षिपम् । पक्षी कीरः तुरङ्गः करेणुः अङ्कैः इतस्ततो गोचरे भ्रमन् शष्पाणि अचरत् । मालाकारो ह्रस्वकान् तरून् आरोपयद् महतोऽकर्तयत् कांश्चिद् उद-

पाटयत् कांश्चिच्च पर्यच्छद् वारिसेचनेन परिबृँहणम् परिवर्द्धनम् तेषामकरोत्। कृषकाः क्षेत्रेभ्यः इक्षून् अच्छिद्दत अचूर्षंश्च। निदाघागमे आम्रवृक्षाः अपि फलवँधिनः आसन्। कृपीवलाः सस्यानाँ सम्पदो लुनँति स्म लूत्वा च केदारान् शस्यसँग्रहम् आतपे शोषयित्वा एकत्र राशीकुर्वन्तः आसन्। केचिच्च भुवमकृषन् बीजानि अवपन्। अन्ये केचिद् भूखँडस्य उत्खनने समीकरणे व्याप्रियन्त मृदश्च उदचिन्वन्। एको वृषभो ग्रामँथलोलायिताद् विरतः पुच्छविवर्तनां कृत्वा अचलत्। एतोऽति काले प्रतपत्सूर्यदारुणायाँ वेलायां आतपँ विहाय निविड़वृक्षच्छायामाश्रितोऽध्व श्रमसुलभां निद्रामगच्छम् यथा अयस्कांतमणिः सुवर्णं विहाय लोहँ श्लिष्यति, व्यामुग्ध इव तत्रैव न तिष्ठति। श्रमँ मुक्त्वा पुनः गँतुम् प्रारभे। किंचिद् अध्वानङ्कृत्वा पिपासार्दितः मार्गवृशाद् उपेतँ पल्वल-मगच्छम् परंतु ग्रीष्मे सँशोषितपङ्कशेषम् तद्‌घर्म-पल्वलमासाद्य न किमपि जलँ प्राप्नवम्। तदस्यगाम्। किरणतप्तायां भूमौ चलन्नहम् स्विन्नगात्रः गरितश्रमुः प्रैक्षयम् परंतु तृषँ शमयितुम् स्वशरीरवारिबिन्दून् विहाय न कुत्रापि जलबिन्दुमपि अपश्यम् यथा उलूखले बद्धस्तैलिकस्य वृषभो न कुत्रापि तिलजम् द्रष्टुम् शक्नोति स्वश्रमेणार्जितां तिलखलिमपि अशितुम् न पारयति। प्रखरातपसिकताश्च प्रतिहताः तिग्म-दीधितेः रश्मयश्चक्षुप्रतिघातँ कुर्वंति स्म यथा दारिद्र्योपहतस्य दशाँ दृष्ट्वा करुणापन्नस्य अश्रुसिक्ते नयनेऽन्यस्य नेत्रे आर्द्रीकुर्वंति॥

उत्प्रेक्ष्य २ उत्तरामाशामङ्गीकृत्य पच्छन्नहम् वृक्ष

छायति शरितोष्णम् मार्गं प्रोगम्। अकस्माद् उत्थितो वातः। मुखे स्वेदलवोद्गमोऽपि अदृश्योऽभवत्। वायुः अस्पन्दयद् वस्त्राणि। मरुद्भिरपाकृतस्वेदलवः पाश्चात्यमपि न अभावयम्। पवनावधूतानां परिश्रम छिदां शाखिनां छायासु चलन् अहं ततः पूर्वम् स्वेद-बिन्दुस्नातललाटोऽपि श्रमापनोदम् प्राप्तम् स्वस्थश्च अभवम्। परंतु तृष्णा मां प्रबलतरं अबाधत॥

मार्गे एका ग्रामटिका उपेता यत्र कूपे एका कन्यका कूपाद् जलमुद्धरति स्म। तत्र अञ्जलिकरपुटोपनीतेन जलेन शांतपिपासोऽभवमहम् पिपासाकुलः। एको ग्रामीणो बालको गाः शादयति स्म। पवमानः पृथिवी रुहान् अवानमयत्। वातेन उत्थापितो रेणुः सङ्गी-कृतश्च सर्वत्र विस्तारितः। पवनाधूतलताः कुसुमानि अवाकिरन् यानि च भूधूलिभृता मरुता ईरितानि यत्र तत्र पतितानि। निदाघार्ताः अध्वगाः विशिश्रमिषवः छायावृक्षम् समाश्रित्य विश्रांतिसुखमासेवंत। इत्थं विहङ्गमदृष्ट्या सर्वतो प्रसृतस्य आलोकस्य किञ्चिज-परीक्षणं कुर्वन्नहं व्यत्यायम् ग्रामान् उटजान् तरु-षण्डांश्च। मारुतस्य रंहः प्रवृद्धरजांसि वहन् यथापूर्व अवर्तत। आयातः प्रदोषसमयः। प्रदोषस्य निष्क्रमणं नाद्भुतं समजनि। परितो विजृम्भितोऽन्धकारः। सतिमिरे पथि द्रुतं विन्यस्यन् पदानि वितन्वन्नहं प्राप्तः प्रतोल्याः पार्श्वे स्थितमेकं ग्रामम्। पवनौघः उपशमं यातः। प्रयाणोपूरितानि रजांसि मामधीकर-णाद् निवृत्तानि। एधानाहारका ग्रामीणा ग्रामं प्रति निवृत्ताः। अनोकहेषु रुरुवुः तिरश्चः। लक्षितमध्वानं नाहमबोधम्। तारकितं वियदराजत। प्राविशमहं

लक्ष्मितिपुञ्जं ग्रामम् क्षुधापनोदाय । 'उदन्यामि' इति चाब्रुवम् गृहमेधिनम् । एको ग्रामीण आह 'गृहाण यादृशं तादृशमस्माकमातिथ्यम्' । भोजनं कृत्वा अहमवोचम् 'इमां निशां अत्रैव वर्त्तयामि' । अमूर्च्छन्निशि तमः । पर्याप्तकलश्चन्द्रः नभसि व्यराजत । पूर्णिमायाः अभिव्यक्ता चन्द्रिका तरुच्छिद्रप्रोता अरमयद् मनः । रात्रौ रोचमानः इन्दुः लोकस्य चक्षुः बध्नाति स्म । मध्यरात्रेऽभितोऽश्रूयत फेरूणां फेत्कारः कुक्कुरस्य च ध्वनिः । अहञ्च गृहवासिभिः सह कथाः कथयन् शरीरमशिथिलयम् । पूर्णकलेन चन्द्रेण ग्रामीणाः प्रत्यादिष्टाः इवाभवन् । पर्याप्तं निरविशमहम् ज्योत्स्नायन्तो आलोकान् । ततो निद्रापरवशीभूतः ॥

प्रशस्तचक्रवर्ती रात्रौ अंतर्जगाम ।

प्रातरुत्थानसमये चन्द्रपादाः विभ्रातग्रहाश्च मन्दभासोऽभवन् । प्रातस्तरामुत्थाय स्नानं प्रतीच्छन् नेपथ्यं कृतवानहम् । निभृतेन्दुः वियति निष्प्रभोऽतिष्ठत् । उदितार्के नभः महीश्रियमपुष्यत् । प्रत्यग्रमातपं हर्षाहं कृतप्रातराशो गृहमेधिभ्य आशिषमभिवाच्य पुनः प्रयाणाय संनद्ध प्रस्थितः शतपदीं कुर्वन् शिलोत्खेपर्यन्तगामिनं पंथानमाश्रित्य । भूयान्नध्वशेषो गतश्रमः आसीत् । रविरतितीक्ष्णमतपत् । आतपक्लांतः तृषा शुष्यत्कण्ठो न कूपं न वापीं न तडागं न सरो न ह्रदं किमपि प्राप्तवानहम् । द्रुततरया गत्या तमध्वानमतिपतितुम् अहम् प्रायस्यम् । मार्गोऽपि निरुपद्रवः आसीत् । गच्छन् २ एकदा भूमौ निपत्य सरुजचरणोऽभवम् । अग्रे कञ्चिद् ग्राममवाप्य घर्मार्तः आत्मानं विगतश्रमङ्कर्तुम् पिपासार्दितकण्ठश्च पानीयं प्राप्य

तृषापनं दङ्क्तुम् प्रवृत्तोऽभूवम्। निम्लोचति मार्तण्ड-मण्डल वासरोऽपि अवसितप्रायोऽभूत्। मार्गे कृच्छ्रमापन्नः कृश्यमानदेहो निशायाः निःशब्दतायां पथिकानां चरणनिक्षेपध्वनिम् शृण्वन् आत्मानमपनीत-श्रमङ्कर्तुम् रेणुराशौ निक्षिप्तविग्रहः प्रस्वापसुखमनुभवितुम् प्रायत ॥

शकटिकानां कलनादो मे श्रुतिपथे न्यपतत्। क्षेत्रेषु चरतो गोव्रजस्य ग्रीवायामवलम्बमानघण्टानादो न्यूनीभूतः क्रमेण। ग्रामस्य पार्श्वे तृणराशयः स्थिताः आसन्। पूर्णकलेन हिमांशुना रजतरञ्जितः प्रत्यन्त-प्रदेशः काम्यभिख्यां निनेने ॥

अर्धोदिते सूर्ये पुनरुत्थाय इत्थमेव यत्नमनुष्ठाय शनैः २ प्राप्तोऽहम् शिलोच्चपर्वतस्य पादमूलम्। ततो जनाकीर्णं संसरणं विहाय पर्वतमारोढुम् प्रारभे भानुरुदजिहीत। भूभागस्य पारुष्यात् पर्वतारोहणं नासीत् सुकरम्। शैलकान्तारे शिलानां भङ्गीभिः एका वर्तनी प्रवर्तितासीत्। सङ्कटाक्रान्तेन तेन पथा गच्छन्तम् मां पादव्यथा अपीडयत्। एकमात्रमपि पदस्खलनं मां पर्वतपादमूलमानयेत् प्राणांश्च हरेत्। मत्कुतूहलं परिपूरयितुमूर्ध्वोर्ध्वमारोहम् पर्वतम्। बाह्यजगद्व्यापारं सर्वं तिरोहितम्। वनं प्रविशतः एकं अमुह्यन् मे दिशः गृहात् प्रस्थानसमये क्लेशबाहुल्यस्य अंशमात्रमपि न व्यतर्कि मया। शर्करिले पथि विचरतो ऽश्रयच्चरणयुगलं मम। परिपूतवायौ विशुद्धप्रदेशे पिकानां कुहुः कुहुरिति कमनीयतीः गिरः शृण्वन् कुसुमितासु वनराजिषु विकचानां पुष्पाणां वनानिलेनोपनीतगन्धं जिघ्रन् भूयसाध्वश्रमेणार्तः श्रमस्वेदा-

द्धशरीरः किंचिद्विश्रांतयेऽतिष्ठम्। पुनश्च तन्निर्मानुषारण्यमध्ये प्रस्तरप्रतिहतगतिप्रसरः उपर्युपरि गंतुमारब्धः आसेदिवांश्च शिलालेखस्तम्भमूलँ भूयसाध्वश्रमेण क्लांतः॥

यतो मया एम. ए. श्रेण्यां प्राचीनैतिह्याध्ययने व्यापृतेन प्राचीनवर्णमाला परिशीलितासीत् अतोऽहम् आत्मानँ विस्मृतवान् शिलालेखस्याध्ययने। तदध्ययनाद् इदँ मे स्फुटीभूतँ यद् अद्य यावद् यावंतःशिलालेखाः मया एम. ए. परीक्षायै अधीतास्तेषु सर्वेषु शिलालेखकर्तृराज्ञा संयति शत्रूणाञ्जयस्य वर्णनमासीत्। कथँ स भुवो गुर्वी धुरं बभार ? कुत्र स सेनानिवेशञ्चकार ? कियंतः पृथिवीक्षितस्तेन पराजिताः ? तस्य वाहिनी कुत्र २ गता ? किं २ आश्चर्यकर्म तस्य ध्वजिनी कृतवती ? यदा स विजितस्य राज्ञः पुरःप्रवेशाभिमुखँ बभूव तदा स कुत्र शिविरं संस्थापयामास ? इति सर्वम् प्रदर्शितमासीत्। परंतु अस्मिन् शिलालेखे तत्र लेशोऽपि। अत्र तु मनुष्यस्य जीवः तस्य उच्चोच्चभावा ये कथमपि न विलोपनीया निर्दिष्टा आसन्। अतोऽस्य शिलालेखस्य महत्त्वँ सर्वोपरि वर्तते' इत्युक्त्वा पत्र विरम्यते ऽस्मिन् विषये॥

ततोऽहम् एम.ए. श्रेण्याम् सम्यगवगतानाम् शिलालेखनियमानाम् यथावत् पालनम् कृत्वा अस्य शिलालेखस्य अक्षराणाम् सम्यगवबोधने व्याप्रिये। तत्रेदम् लिखितमासीत्—

ॐ नमो भगवते शङ्कराय। शङ्कराय नमो नमः।
धर्ममाचर। प्रतिदिनम् प्रवचनम् कुरु।
चौर्यम् परिहर।

परहिते मनो निधेहि। परार्थाय यतस्व।
साधकपुरुषाय दयस्व। तस्मै अन्नप्रबँधम् कुरु।
यदा राजा नागसेनः सपरिच्छदोऽागतस्तदा
राजा कल्याणगुणेन तेषां मांसभक्षणाय एकोऽजा
खण्डः प्रेषितः।
बलिभृतः सुखसमृद्धिं भोदयँति। स्व पदात् न ते
प्रच्यावयिष्यँते।
ध्याने उन्मीलँति निमीलँति यस्य अक्षीणि तस्मै
एकाम्बराय नमोनमः।
धर्मपुस्तकानि चर्चितव्यानि।
........विद्वान् ऋरीन् करोति।
(अस्मिन् अंतिमलेखे नागसेनस्य वीरतापरिचायः
कानि कानिचित् पूर्ववर्तीनि अक्षराणि कालवशाद्
भिलष्टानि सञ्जातानि।)
अहम् प्राचीनलिपिविज्ञाननियमानुसारेण इत्थम
धीतवान् सम्यक् परिरक्षितवांश्च स्व दैनन्दिनी
पुस्तिकायाम्।
ॐ नमो भगवते सङ्कराय। सङ्कराय नमोनमः।
धर्म माचर। प्रतिदिनम् प्रवँचनम् कुरु।
शौर्यम् परिहर।
परहिते मनो निधेहि। परार्थाय यतस्व।
साधकपुरुषाय दयस्व। तस्मै अन्नप्रबँधम् कुरु।
यदा राजा नागसेनः सपरिच्छदोऽागतस्तदा
राजा कल्याणगुणेन तेषां मांसभक्षणाय एकोऽजा
खण्डः प्रेषितः।
बलिभृतः सुखसमृद्धिं भोदयँति। स्व पदात् न ते
प्रच्यावयिष्यँते।

स्थाने उन्मीलती निमीलती यस्य अक्षिणी तस्मै शुक्राम्बराय नमो नमः।

धर्मपुस्तकानि चर्चितव्यानि।

......विद्वान् अरीन् करोति।

अत्र इदमवधेयम्। प्राचीनलेखेषु 'श' स्थाने 'ब' अपि च 'च' स्थानेऽपि 'च' एव प्रयुज्यते स्म। प्रवञ्चन इत्यस्य प्रवंशन इत्यपि पाठः सम्भवति। परंतु कोशे नास्ति कश्चित् प्रवंशनशब्दः। अतः प्रवंचन इत्येव पाठः समीचीनः सुपरुश्चः। एवमन्यत्रापि॥

आत्मानम् शान्तयुतं विधाय अहम् तस्मात् स्थानाद् अपावर्तै। पर्वतावरोहणं तु तावत् सुकरम्। वृक्षाः कुसुमानि उदीरयामासुः। अन्यभृताः द्रुमशाखासु गंधसनाथानां पुष्पाणामुपरि दिशामुखानि मुखरयन्तोऽकूजन्। चललदयनिपातने परिचयकर्तुमहम् एकं लोष्टं गृहीत्वा यावत् प्रक्षेप्तुमुद्यतस्तावत् सर्वे ते परभृताः उड्डीयंत। द्विरेफस्य झंकारो मम श्रुतिसरणिम् निपत्य पुनर्विरतः। भ्रमरः पुष्पोपरि झंकारं कृत्वा भ्रमन् तत्सुधापाने मूकीभूतो यथा प्रणयी प्रेमिकायाः परितो चाटुशतं कृत्वा तस्याश्चुम्बनमारब्धो मूको जायते। पर्वततटे पुष्पापचयं कुर्वन् प्राप्तोऽहमधःप्रदेशम्। चरणौ मम शोणगुल्फौ व्रणकिणाङ्कितौ च जातौ तावत्। पादचरणम् दुष्करम्। अवसन्नसत्त्वश्चाहमासम्। अतोऽहम् स्वस्थो भूत्वा स्व गृहमेष्यामीति कृत्वा कस्यचिद् गृहे कुटुम्बाङ्गतया स्थितिमकरवम्। प्रतिदिनं तत्रैव परिसमाप्ताहारोऽतिष्ठम्। अभ्रिता द्यौः। कालाम्बुदकालो वर्षाकालः उपस्थितः। सुखाः मरुतो ववुः। मद्रं २ वर्षति वारि-

कणिका वारिवाहाः। गगनाभोगो विद्युद्रेखावलयिता कादम्बिनी मह्यं २ प्रासरत्। निदाघसमयप्रचण्डेन चण्डभानुना दह्यमाना मेदिनी अम्भपृषतैः विशदोच्छ्वसिता बभूव। शातह्रदं ज्योतिः क्षणिकञ्चाकचक्यं विधाय तिरोभूता। खे सम्पतन्ती बलाकपंक्तिः कामपि सुषुमामवहत्। अम्बरमम्बुदैः स्थगितम्। वर्षा धारासारेण वर्षितुं प्रवृत्ता। व्यद्योतत क्षणप्रभा। नभस्तलं वारिदैरवास्तीर्यत। अभ्रविलिप्तौः द्यौः निखिलजगद् ज्योत्स्नोपरोधिनि दुर्दिनांधकारे न्यमज्जयत् अतिभीषणा सौदामनी समदीप्यत। वृष्टिमहौघेन प्लावितमभूद् धरणीतलम्। वर्षावेगो महोऽभूत्। सवृष्टिपटपटाशब्दम् मरुद्रुतमश्रूयत। प्रवर्षेण विरते दिशः प्रसेदुः। मार्तण्डानुपक्रांतिम् मंथरीकुर्वती अभ्रलेखा आकाशे मात्रैवावशिष्टा। नीरपतत्रिणः सर्वत्र जलविहारञ्चक्रुः

अंशुमाली मेघमुक्तायां दिवि अरोचत।

वर्षागमात्तद् गृहे नियन्त्रितः प्राप्तपर्याप्तावकाशोऽहं शिलालेखोपदेशान् मनसा पुनःपुनरावर्तयन् समयं अनयम्। इमे उपदेशाः मानवान् ऋजुपथं दर्शयन्ति समस्तजगत्कार्यं प्रसाधयितुमलंभवन्ति उच्चां भावनां भावयन्ति। ये इमानादेशाननुपालयन्ति तेषु प्रतिपादितं सन्मार्गमनुरुध्यन्ते तेषु विश्वासमानयन्ति तान् सर्वतोभावेन श्रद्दधति ते सुखादिकं प्रपद्यन्ते उत्पन्नबोधाः जायन्ते स्वजीवनञ्च सफलयन्ति। अतोऽहम् तान् क्रियासमभिहारेण ब्रुवन् कालमयापयम् साम्रेडम् तान् रटयासम्॥

आविलाम्भाः अप्रसन्नाः प्रावृट्कुल्याः अन्योऽन्य-

संसक्तजलाः वेलामतिक्रम्य प्रावहन् । नदनद्योः तोयव्यतिकरः क्षीणतोयायां तस्यामपतत् । कृषाणानाञ्चानीजनकोऽवग्रहो नाशङ्कतः । यत्र तत्र क्षितौ कत्तृणानि आरूढानि । घनव्यपायेन यत्र तत्र अप्सु अकम्पानि यमा अदृश्यत । तँवानदी प्रसन्नस्तिमितः प्रवाहेण कृषिमप्सरितास्त्रलसंनिपातेन जलौघँ बृंहयँती निकामजला मधुरमर्मरध्वनिना प्रावहत् । नदी सा जलनिधिमनुहरति स्म । न तस्याः आवारपारे दृश्येते । तटिनीतीरे नक्तं नीरवँ निस्पन्दश्चासीत् ॥

अकस्मादुत्थना प्रचण्डवात्या । सहसा चोत्थितँ मेघस्तनितम् । वाताः ववुः । जलधरपटलनिर्घोषो वायुमूत्कारेण सङ्गत्य सर्वं अँतरिक्षम् व्याप्तवान् । उल्लोलैः कल्लोलजालैः समाकुला नदी कूलँ भित्त्वा वेलावृद्धिञ्चकार । तस्याः वीचिक्षोभः उत्थितस्तस्य रंहसः प्रमाणमदात् । अधिवेलँ स्थिताः वृक्षाः प्रवृद्धोर्मिभिरुत्पाटिताः बृहत्तरङ्गैः नीयमानाः नदीजले स्नानविधिम् निर्वर्तयितुमागताञ्जनान् प्रतिभयँ ददुः । गगनचारी सेन्द्रचापो विद्युत्वान् कालमेघो धारासारं अवर्षत् । क्रन्दन्तः पांथाः यत्र तत्र शरणाय दुद्रुवुः । स्नूतवासः एकः पथिकोऽस्माकँ गृहँ प्राविशत् ॥

गते नभसि मासे निरभ्रः आकाशः प्रसन्नाश्च दिशो विरेजुः । अहञ्च तस्माद् गृहान्निष्क्रांतः श्यानकर्दमेन पथा स्वगृहँ प्रति प्रास्थिषि । पुराणपत्रापगमादनँतरं सन्नद्धमनोज्ञपल्लवाः द्रुमनिकराः मन्दमन्दमारुतैरान्दोलिताः पथिकान् अवीजयन् । गभस्तिमतः तेजः खे अमन्दायत । पक्षिणो द्रुमाद् द्रुममुड्डयमानाः पक्षस्फुरणञ्चाकुर्वन् । कश्चिदेकः सूनापरिचरः आमिष-

लोलुपो विहगो द्रुमशाखायामङ्कया निष्कुषितं मांसखण्डमाश्नात्। क्वचिद् उरश्रसन्तानं अपश्यम् क्वचिद् मेषशावकस्य रम्भणमशृणवम् क्वचित् तु पुष्पामोदमास्वादयन् दीर्घमध्वानमतिक्रान्तोऽहम् ॥

उल्वणेन मार्गेण गच्छन् अहमेकमश्वत्थमायातः। तत्राहं पथोऽभ्रंशे : किञ्चिद् दूरङ्गत्वा अहमजानाम् यन्नाथं यथायातमार्गः। एके पाश्व आयान्तं महाश्वारूढं युवानमहमप्राक्षम् 'कुत्र गच्छत्येष पंथाः?' स प्रत्युवाच 'अयं मार्गः उदयकोटं नयति। प्राचीनस्मारकाणामनुसंधान प्रदेशाज्ञाहमानोऽहम् तत्कोटमपि द्रष्टुम् समुत्सुकोऽभवम् ॥

उदयकोटश्चायम् प्रांशुभित्तिभिः परिच्छिन्नोऽस्ति। अयं दुर्गो भूतप्रेतावेष्टो विद्यत इति मह्यम् लोका मार्गेऽकथयन्। अंतश्चास्य विलक्षणमस्ति भित्तिश्चका वर्तुलाकारैः काचशकलैः जटिता विद्यते येषु एकैकस्मिन् पुरःस्थितस्य मानवस्य आकृतिः प्रतिविंबिता भवति। परंतु आदर्शाश्च ते न तथा सौष्ठवेन संपन्नाः। पुरःस्थितस्य मानवस्याकृतिः किञ्चिद् विकृताकारा लक्ष्यते। काचजटिता भित्तिश्चेयम् तथा स्वच्छा यथा शून्यवत् प्रतिभाति। उपरि पटलञ्च किमपि नास्ति ॥

दुर्गान्तः प्रविश्य भित्तिं प्रति गत्वा यदाहम् हस्तं उदयच्छे तदाहमनेकान् पुरुषान् हस्तमुद्यम्य मां हन्तुमुद्यतान् अद्राक्षम्। अहञ्च भीतभीतो भयसंपीडिताङ्गः सत्वरमद्रवम्। कश्चः एकः पुरुषः आधुनिकज्ञानविज्ञानस्वरूपशः 'किमिति किमिति' मामप्राक्षीत्।

'भूताविष्टोऽयङ्कोटः। भूताः माम् जिघांसंति।'

'किं भूताः करिष्यंति? न हस्तमुद्यम्य भित्तिं प्रति

गत्वा आत्मनो विकृतानि प्रतिबिम्बानि दृष्ट्वा भित्ति-मभ्यद्रन् चूर्णीभूतहस्तश्च मां प्रत्यधावत् ॥

'काचभित्तिस्त्वेषा । न कोऽपि भूतस्तत्र ।' सोऽब्रवीत् ।

गच्छतु तच्छतु । अहम् तु 'शौर्यं परिहर' इति शिलालेखशासने स्थितः स्वविग्रहमक्षतमरक्षम् । त्वम् तु शौर्यम् प्रकटयित्वा स्वहस्तम् संचूर्णितवान् । इत्यहमवोचम् ॥

भ्रष्टाध्वा अहम् पुनश्चतुष्पथम् प्रत्यगच्छम् ।

तीव्रवृष्ट्यनन्तरं तडागानि पल्वलानि च बहून्यपि जातानि । जलाशयाः सलिलैः पूर्णाः । एकत्र शफरी-परिवर्तैः कलिते सलिलाशये एको बको मत्स्यनिग्रहे ध्यानावस्थितः सन् निर्निमेषचक्षुषा पश्यति स्म । अस्य बकध्यानिनः कृते शिलालेखे 'ध्याने उन्मीलती निमीलती यस्य अक्षिणी तस्मै एकाम्बराय नमोनमः' इत्युपदिष्टम् । अयमपि एकेन श्वेतपरिच्छदेनावृतः अतः एकाम्बरः । ध्याने च चक्षुषोः सङ्कोचविकोचौ करोति । अयङ्कश्चित् पूजार्हः । तिरुकलिकद्दरम् इति पर्वते प्रतिदिनं द्वौ गृध्रौ मध्याह्नसमये आयातौ अर्चकस्य हस्तात् तण्डुलान् भक्षयित्वा उड्डयेते । सम्वेताः जनाः तौ सम्पातिजटायु इत्येतयोः अवतारौ इति कृत्वा बद्धाञ्जलयः नमस्कुर्वन्ति । एवमेव असौ बकध्यानी अपि कश्चिद् अवतारः स्यात् । प्रतिदिनमहम् तस्य अर्हणार्थम् तत्र गतागतमकुर्वि ॥

एवं यातायातकुर्वता मया दृष्टः एकेन जघन-वाससा परिवृतो मार्गपार्श्वे उपविष्टो बुभुक्षापीडया चक्षुषी उन्मीलन् निमीलन् एको भिक्षुकः । भिक्षायै

समानीतकरपुटं तं प्रार्थनां कुर्वाणं मन्यमानोऽहम् अयमपि नादृशः एव एकाऽवर्गे ध्याने चक्षुषी उन्मीलति निमीलति। अयमपि कोऽपि साधकपुरुषो ब्रह्मसङ्गत्यै साधनाङ्करोतीति मम वन्दनीयः इति निरश्चिनवम्।

एवं पर्यायवन्दनां कुर्वति मयि एकस्मिन् दिने स भिक्षुको बुभुक्षया देहं तत्याज। शिलालेखे नूनं दिष्टमेव आसीत् 'साधकपुरुषाय दयस्व। तस्यान्नप्रबंधम् कुरु।' अतोऽहम् तस्यांतिमसंस्कारङ्कर्तुम् समनह्यम्। दहनसंस्काराय काष्ठसञ्चयस्य मूल्यं मया देयम्। शवनिखनने च षड्हस्तदीर्घा चतुर्हस्तव्यायता भूः अपेक्ष्यते। तस्य मूल्यं शासनाय देयम्. एवं धननाशाय नाहम् समुद्यतो आसम्। अहम् तस्य जले निक्षेपणमेव सर्वश्रेष्ठम् संस्कारं निश्चितवान्॥

प्रतिदिनं पर्यायेण ततः इतः इतस्ततो गच्छतो मम गुल्फौ अत्रुट्यताम्। अतोऽहं तं शवं तेन जघनवाससा आच्छाद्य तस्मिन्नेव जलाशये निक्षेप्तुमायाम् यत्र स बलाहकः उदरपूर्त्यै आयाति स्म। पथि आगच्छतो मे मनसि बुद्धिरेवमस्फुरद् यद् वन्दनायाः प्रयोजनम् किम्? लोकाः भगवद्वन्दनां कृत्वा जीविकार्जनकार्यमारभंते। जीविकार्जने सिद्धिरेव भगवद्वन्दनायाः प्रयोजनम्। अतोऽहमपि वन्दनानंतरं जीविकामायोजयिष्यामि। एवङ्कति दिनानि अहं स्थास्यामि अत्र वित्तार्जनम् विना ?। इत्थं सुविचारिते मया जालिकाद् एकः आनायः आनीतः। तञ्च आनायमहम् तत्र जले यत्र बको ध्यानमग्नः तिष्ठति स्म प्रसारितवान् शवञ्च तत् जालोपरि तत्र जलाशये कूलसमीपे

निहित थान् यत्र बकः आयाति स्म । द्वयोः वंहूनां कृत्वा फलं प्रत्यैक्षत । ऊर्ध्वं लघोः कालात् तत्र संख्यातीताः मत्स्याः पललाशनाय एकत्र भूताः । तांश्च अशनाय बका अपि असंख्यास्तत्र आयाताः । तदा मया सर्वे ते एकाग्रनीभूताः मत्स्या बका आनायेन अपकृष्टाः । एवं कतवारं एकस्मिन्दिवसे आनायसंश्रितान् बहु-संख्याकान् बकान् मत्स्यानहम् गृहीतवान् । संध्या-समये तं शवं तत्रैव स्थाप्य सर्वान् तान् बकान् मत्स्या-नापणवीथ्यां विक्रीय आगच्छम् । अपरे द्युः एवमेव । इत्थम् यावत् स शवो मत्स्यैर निःशेषम् भक्षितस्तावद् अहम् गणनातीतान् बकान् मत्स्यान् गृहीत्वा प्रचुरम् धनमार्जयम् ॥

प्रदोषेऽन्तिमम् विक्रयम् आपणे दत्त्वा अहम् गृहम् उद्दिश्य प्रस्थितवान् । कश्चित् स्त्री नदीघट्टे बालकम् उपवेश्य स्नातुमारब्धः । संततं सलिलेन खन्यमानाः वट्टाः अवघूर्णन्ते इव । बालकश्च तस्मिन् प्रदेशे घट्टे उपविष्टः सद्यः प्रवाहे पतितः । जनकस्तस्य सपदि तटिन्यां संप्लुत्य बालकम् सलिलाद् उत्तोल्य भुवम् आनयामास । एको महावृषभः शृङ्गाभ्याम् नदी-तटानि विदारयन् नदीजलम् आविलञ्चकार । मन्दम् मन्दम् वहति नदी पयःपूरेण । चण्डरोचिषि अस्तम् इते प्रतीच्चि हरिति उदितस्य शिशिरांशोः करैः विरो-चितोऽध्वा क्वचिद् वृक्षच्छायाभिः शवलीकृतः प्रशांताङ्गारमिश्रितक्षारस्य शोभाम् उवाह यथा दिने आतपविद्योतितो पन्थाः छायाभिश्चित्रीकृतः प्रशांता-ङ्गारयुक्तज्वलत्काष्ठानाम् तुलाम् बिभर्ति । रात्रौ कुत्र-चित् तृणनिवहे विश्रामम् व्यतनवम् । अनिद्रचक्षो

दिगन्तरालम् विद्योतयामास। रात्रौ प्रथमे प्रहरे ऽहम् धरणीतले लुठन् निद्राम् न लब्धवान्। ततः निद्रावशङ्गतः॥

यामसमात्रावशिष्टायाम् निशायाम् अहम् पक्षि-संरावमश्रृणवम्: अहं खे क्षितितलुठितोऽस्थतो ऽहम् किंचिद् अध्वानङ्गत्वा उद्यानमेकम् प्राप्तम्। आरामे किंचिद् आरमामि इति कृत्वा तत्र प्रविश्य सौम्यानिले प्रवाति कस्मिश्चिद्विटपे उपविश्य परितो चक्षुः न्यक्षिपम्! एकेन वातविद्धेन काशपुष्पखण्डेन साश्रुपातम् मुखम् उपसृज्य तद्वातेन विनीतखेदः पुनः प्रयाणमारब्धवान् अहम्. एको ह्रदो यादोभिः जलग्राहैः राजिलैरुद्घृतनक्रैश्च मथ्यमानो भूम्यन्तर्गुहासिनीयमाननाटकस्य साम्यम् उवाह॥

व्यक्तो विवस्वान् जगत् प्रकाशयामास। आर्गाद् मार्गे एकम् आवेशनम्। उत्कलिकाविनोदपरायणो ऽहम् तत्रागच्छम्। तत्रावेशने कर्मकरगणः कार्पासं धुनोति कृणत्ति वयति स्म च। इतस्ततः आवेशनाद् बहिः प्राङ्गणे ऽहम् उच्चांश्चतूलराशीन् अद्राक्षम्। मम दृष्टिस्तत्र प्रत्युप्यते स्म मुहुर्मुहुः। कथम् नाम नेमे हिमपर्वताकाराः तूलराशयो ममैव स्युः। शिलालेखे आलप्तोऽस्मि 'परहिते मनो निधेहि। परार्थाय यतस्व' अर्थात् 'यदेव कश्चित् परोऽदधात् तस्मिन् आशाम् बधान। तस्य च अर्धभाग् भवितुम् यत्नम् विधेहि'। कथा एका इत्थम् श्रूयते –

एकदा परिकाले द्रविडदेशे गृहीततिरुमङ्गआलवार-सिधम् कोऽपि सांयात्रिको भृत्यम् विधाय पोत समुपवेश्य देशान्तरम् निनाय। तस्माद् देशाद् उड्डीय

पूगफलं संभृतम्। एकं क्रमुकफलं भित्त्वा अर्धशकलं विधाय परिकालो वणिग्वरम् 'इदं मदीयमर्द्धं पूगफलं पोते निधेहि। विलिख्य च देहि यदस्मिन् प्लवे ऽर्द्धं क्रमुकफलम् परिकालस्य वर्तते' इति समगादीत्। 'अपि त्वम् यथेच्छं सहस्रं पूगीफलमदधाः' इति पोतवणिगभाषिष्ट। परिकालोऽब्रवीत् 'नाहमधार्मिको यदसत्यतया गृह्णीयाम् अहम् त्वर्द्धं वाञ्छामीति' वणिजो वराकः सरलांतःकरण आसीत्। स लिखित्वा अददात्। यदा स्वदेशातटनगरमुपासदत् प्रवहणम् क्रमुकफलञ्चोत्तारयितुम् प्रवृत्तश्जनैस्तदा परिकालो ऽभाषत 'ममार्द्धं पूगो दीयतामिति। सार्थवाहस्तस्मै तमेवार्द्धं पूगमदात्। तदा परिकालः 'मम तु पोते ऽर्द्धः क्रमुको वर्तते। तस्माद् अर्द्धभागं ग्रहीष्यामीति विवादमकुरुत। राजपुरुषपर्यंतम् विवादो गतः। परिकालस्तु 'अनेन अर्द्धपूगप्रदानमलेखि' इति व्याहृत्य वणिजस्तम् लेखमदर्शयत्। नैगमो बहुलमचकथत् परं नामनुतासौ। अर्द्धपूगजातमुपादाय व्यरमत् वैष्णवेभ्यः समर्पितवान्॥

अयम् तु शास्त्रानुकूलो व्यापारोऽस्माकमार्द्र शपुरुषाणाञ्चरितञ्च तमुपोद्वलयति। अतः किंचिद् अनुष्ठेयम् इमं तूलराशिमात्मसात् कर्तुम्॥

अहङ्गत्वा वस्त्राणि मोचयित्वा कौपीनं धृत्वा 'तारकोल' इत्यभिधेयेन तैलोपमेन पदार्थेन मम अङ्गानि विलिप्य तत्रागतः। आगतश्च सोत्फालं तूलराशिशिखरे पतितोऽहम्। तूलराशौ च निमग्नः। परिवेष्टितो जातः तूलराशिना। ततश्चोत्थाय तूलराशेः अर्द्धप्रायं तूलम् ममाङ्गैः संलग्नं हस्ताभ्यां गृहीतं

चादाय श्वेतश्मश्रुसन्निभौ गन्तुम् प्रारभे ॥

'हूँ हो ! कुत्र त्वङ्गच्छसि अस्माकङ्कार्पासँ लुण्ठित्वा' इति ते संरावञ्चक्रुः ।

'इदँ तूलँ मम शरीरसंरक्षँ मम स्वापतेयञ्जातम् । प्रतिदिनँ सहस्रशो मनुष्याः भरण्यभुजः दर्शकाश्च शिल्पालयमायांति । कियँनः कार्पासकणाः तूलिकाश्च यँत्रेभ्यः उड्डीयमानाः तेषाँ शरीरमुखशिरस्त्राणोपरि पतँति । तैस्सहैव ते गच्छँति । यूयम् न तान् उच्चिनुथ एवङ्कियता वृहत्परिमाणेन प्रतिदिनङ्कार्पासँ वहिर्गच्छति । इतोऽपि तदधिकम् । स्वयम् प्रवर्तितान्नियमान् उल्लङ्घितुम् न पारयध्वे यूयम् ॥

सर्वथा सज्जीभूतः प्राप्तोऽहञ्चाल्लिनगरम् । वृत्तपत्रेषु मुद्रिताङ्घोषणामेकामपठम् । एकः पुण्यपुरुषः पावनान्तःकरणो महनीयचरित्रः श्लाघनीयगुणालयो महाविद्वान् सकलशास्त्रनिष्णातो ब्रह्मलिङ्गो धर्मम्भामन्दिरे प्रतिदिनँ सप्तवादनसमयप्रभृति नववादनसमयपर्यंतम् प्रवचनङ्करिष्यति धर्मरहस्यान् विवेचयिष्यति । सकलसन्देहच्छेदनञ्च करिष्यति । सर्वे सज्जनाः मनःसमुन्नतिमापादयितुम् स्व चेतः समाधातुम् तस्योपदेशमाकर्णयितुम् प्रसादँ क्रियेरन् ॥

यदाहम् प्रख्यापणमिदमवाचयम् तदा मे मनसि विचारोऽयमुदितो यदहमपि किंचिज्जानामि सदाचारव्यवहारविषये शिलालेखपठनात् । परिचयश्च पर्याप्तमवाप्तवानस्मि एतदधिकृत्य । अस्य महात्मनो ज्ञानेन साधँ आत्मनो ज्ञानसञ्चयँ तुलयिष्यामि तावत् इति कृत्वा अहमपि तत्र गँतुमारभ्यः ॥

भद्रपुरुष एकाङ्कथामनुवाच्य युक्तिप्रयुक्तिभिः कथा·

प्रकथाभिस्तमर्थम् भूयसे वैशद्याय पल्लवयति स्म। वह्वीः धर्ममेदुराः पुण्यकथाः कथयन् स तासामाशयँ स्वेङ्गिताकूतादिभिः हस्तपादविक्षेपादिभिश्च श्रोतॄणां चित्ते निवेशयितुम् प्रायस्यत्। चित्रचित्रैः चित्तहारिभिः वृत्तांतवर्णनैश्च तेषां मनः आसञ्जयितुम् प्रयेते। प्रार्थनापुस्तकानि च तेभ्यः वँटतें स्म। निरूढकार्याः प्रार्थनानँतरं ते तानि प्रत्यर्पयन्ति स्म।॥

दिवसगणे व्यतीते एकदाहँ तँ महानुभावँ प्रवचनानँतरं प्रत्यक्षयम्। लपितुं प्रारब्धः। किमर्थम् भवानेवँ प्रयस्यति? सार्द्धं २ शुष्ककण्ठो जायते कासश्च प्रादुर्भवति। प्रतिदिनँ विफलप्रयासोऽपि भवान् न विरमति अस्माद् दुःसाहसात्। धर्मपुस्तकानि च वँठते स्म स्व वित्तव्ययेन।' इत्यहमप्राक्षम्॥

नागसेनमहाराजस्य शिलालेखे इदमाज्ञप्तम् 'धर्मं माचर! प्रतिदिनँ प्रवचनँ कुरु। धर्मपुस्तकानि चर्चितव्यानि।' अतोऽहङ्करोमि तदाज्ञापालनमिति स प्रत्यब्रवीत्॥

नहि २। भवान् नितरां व्यामुग्धः। भवान् भ्रांतः सन् प्रस्खलति। नास्ति तत्र इदृशः किमपि। स शिलालेखस्तम्भस्तु मया स्वयम् प्रत्यक्षीकृतः। तत्र तु इदम् लिखितम् 'धर्मं माचर। प्रतिदिनँ प्रवँचनँ कुरु। धर्मपुस्तकानि चर्वितव्यानि।' इति। नास्ति अविदितम् प्राचीनलिपिज्ञानां यत् शिलालेखेषु अनुस्वारलोपो भवत्येव। पुनश्च 'व' स्थाने 'च' लिख्यते! अतो मम पाठः शुद्धः। भवतस्तु अशुद्धः पाठः। अत एव भवता वक्रः पन्थाः समाश्रीयते। प्रतिदिनँ किं लभ्यते भवता यदि भवतः पाठः शुद्धो भवेत्तर्हि भवते सुखमावहेत्

इति ॥

पाठस्तु ममैव शुद्धः। प्रवचनेन धनप्राप्तिरपि सम्भवा। प्रवचनानंतरं लोकाः कथङ्कम् धन ददत्येव परंतु नाहम् किमपि प्राप्नोमीति स नैराश्येनाब्रवीत्॥

'भवतः पाठ एव अशुद्धः। ममैव पाठः शुद्धः। यदा भवान् प्रवचनङ्करोति लोकाश्च एकतानमनोभिः भवतः प्रवचनम् शृण्वंति। अन्यतो विनिवृत्ता हि एषा चक्षुः भवति सर्क्कं भवति एकाँतमासक्तमनाश्च भवतो वचः शृण्वंति तदाहम् प्रवँचनङ्करोमि। तेषाङ्कंचुक-कोषेभ्यो धनमाहरामि। कोषे करं निवेश्य हस्तः स्वैः बद्धानि रूप्यकाणकानि नाणककोषणि वा अपाकर्षामि। ते तु अन्यत्र व्यासक्तमनसो न किमपि ज्ञातुँ प्रभवँति। प्रवचनांते ते कोशे धनमलब्ध्वा न भवँतम् किमपि दातुम् प्रभवन्ति। प्रार्थनापुस्तकमपि भवता वँडितम् नाहम् पुस्तकीयामि। अहम् तु पत्रानुपत्रम् तच्चर्वामि तेषाँ रसम् संचूष्य गुटिकाश्च बहिः प्रक्षिपामि। कस्यचिच्चोपानहम् धृत्वा गच्छामि। फलानुमेयाः आरम्भाः। मम पाठो मह्यम् अभिलषितमर्थम् ददाति। अतो मम पाठः शुद्धः। मया एव लिपेः यथावद् ग्रहणम् कृतम् न तु भवता।'

'परंतु मम प्रवचनेन एव भवतः प्रवञ्चनम् सफली भवति। यद्यहम् प्रवचनम् नाकरिष्यम् तर्हि भवतः प्रवञ्चनमपि न सफलमभविष्यत् यथा उपघ्नतरोः छेदाद् व्रततिरपि शोचनीयां दशां प्रपद्यते।'

'न ह्यन्यन्यत्। यदि समाजे प्रवञ्चकाः न स्युः तर्हि न कोऽपि भवँतम् प्रवचनाय आह्वयेत्।'

इत्थमावयोः द्वन्द्वोः समाधानम् सख्यञ्च जातम्।

प्रतिदिनँ भवान् प्रवचनङ्करोतु अहम् प्रवञ्चनङ्करिष्ये। स्थायीरूपेण आवयोः जीविका संपत्स्यते। समम् विभजिष्यावहे इत्यहमब्रवम्॥

एकदाहम् प्रतोल्यामागच्छन् एकँ नवनिर्मितम् गृहँ द्रष्टुमतिष्ठम्। झटिति मम मस्तके एकँ मृत्तिका लोष्ठञ्चटितम्। यस्याः दिशः लोष्ठमायातम् तस्यां दिशि पश्यन् अहम् भग्नभ्रूभयानकभालमेकम् नरं अन्यैः कैश्चिद् आरक्तमुखनयनैः जनैरनुगम्यमानम् मे दिशि मामवस्कन्दितुमागच्छँतमद्राक्षम्। अहम् तु सत्वरया नेदिष्ठे गृहे आत्मानँ सङ्गोप्य अतिष्ठम्। एका जरती नारी द्वारि तिष्ठति स्म। मां प्रवेश्य सा द्वारं दत्तवती। गृहवातायनाद् अहङ्क्लिपयानि क्रूर-दृश्यान्यपश्यम्। एकः क्रोधेन वलिताकुञ्चितभ्रूकुटि-ललाटतलः अन्यमेकमेकाकिनङ्गच्छन्तम् क्रूरदृष्ट्या विलोक्य तस्योपरि कुठारङ्क्षिप्तवान्। प्रहारस्तस्य ललाटे लग्नः। स तु पाटितललाटः फूत्कर्तुमुपचक्रमे। अन्यश्चैकः तेनैव कोपकोटिमापन्नेन हतो मृत्युपथम् समेतः। अन्यो विकलनेत्रः सम्पादितः। अपरश्चैको मार्गे गच्छन् कुपिताननेन एकेन उदग्रेण अश्मना अभिहतः। एको जननिवहो दैनिककार्य्याय स्वावेशनँ प्रति गच्छन् सरोषदष्टाधिकलोहितोष्ठैः व्यक्तोर्ध्व-रेखाभ्रूकुटिवद्भिः उपद्रवम् विधातुम् बद्धपरिकरैः आग्नेयचूर्णेन दिष्टांतम् प्रेषितः। स विद्यालयङ्गच्छन् एको विद्यार्थी निकृष्टासिना अन्येन निकृत्तकण्ठो रुधिरप्लावितदेहो अलुठत। अन्यश्चैकोऽतिलघुहस्तो ऽस्त्रम् प्रायुँक्त अन्यस्य एकस्य शिरो निमेषार्धाद् भूमौ अपातयत्। सर्वत्र नगरेऽभिव्यापिका कार्यनिवृत्तिः

जाता सर्वे नागरिकाः स्वगृहाद् बहिः पदमपि प्रक्षेपणे भीताः कार्यविसर्गं कृतवन्तः वहिष्प्रदेशं न अगुः॥

एको यात्री धूमयानस्थानकङ्गच्छन् पथि परशुना उत्कृत्तशिरः कृतः। तस्य च हुङ्कारगर्भं शिरो भूमौ अपतत्। वद्धवैरयोः द्वयोः पक्षयोः प्रतोल्यां प्रधनम् भूतम्, विक्रमव्यतिहारेण तेऽन्योऽन्योपरि अस्त्राणि आस्यन्। तेषु कतिपयाः मुखावयवलूनाः कण्ठवर्तिभिः प्राणैः व्यात्तमुखाः उल्लसितुमारेभिरे। नयोः पक्षयोः परस्परङ्कलहातयोः इयती वेला विलग्ना परंतु तयोः युद्धम् न तावत् प्रशमं अयात्यावत्तिपु एकः कश्चिच्छत्रुभय उत्प्लुवी ग्लायितोऽपरश्च अस्त्रैरालीढ तनुः भूमौ पपात शिथिलितप्राणः सद्यःप्राणांस्तत्याज अन्यः छिन्नशिरो व्यापत्तिमापेदे। अन्यः एको वपुषो गुरुत्वाद्भयङ्करः रोषघूर्णितलोचनः कोपहलाहलधकी भूतास्यः एकम् लघुकायम् रुधिरदिग्ध कृश्चकार। गृहाणां पिहितानि सार्गलानि कपाटानि भंक्त्वा तदन्तेवासिनः जघ्नुः। अयम् सङ्क्षोभोऽतिवृद्धिङ्गतः क्षोभकारिणी गुलिकाः प्राक्षिपन्। अगारेष्वग्निमदुः। यष्टि ग्राहमयुध्यंत। कियंतः संस्थितोः संचूर्णिताङ्गाः वा सञ्जाताः। सर्वत्र नगरे लोका अन्योऽन्यैः व्यगृह्णन्। अयम् विसृमरः आतङ्को न तावद् उपारमद् यावद् अनेकानि गृहाणि नभःस्पृंशि सौधानि च नानलसात् कृतानि विस्फोटेन स्फोटितानि भूलात् कृतानि शतशश्च मनुष्याः प्राणैः न व्ययुज्यंत॥

यावत्र सर्वं प्रशमङ्गतम् तावदहम् तस्मिन् एव गृहेऽतिष्ठम्। वृद्धायाः पतिः पञ्चतामितः पुत्रश्च बहिः गतः आसीत्। अहम् तामपृच्छम् किमत्र कारणम्?

वृद्धा किमपि न अवेत्। स्थविरायाः पुत्रोऽपि बहिर्गो गृहम् प्रत्यागच्छत्। स तु मया पृष्टो मां सर्वं समाचारं इत्थमभाषीत् –

एकः खलपूः एकेन द्विजेन पादप्रहारेण हतः। खलपूः तँ प्रहारं सोढुमनीश्वरोऽरुष्कराणि वचनानि उदीर्य प्रतिप्रहारं कृतवान्। द्विजाश्च निर्धनस्तस्य द्विजस्य प्रत्यर्थंतगीभूता तस्य साहाय्यञ्चक्रिरे। खलप्वो ऽपि एवमेव खलप्वः साहाय्यार्थमाजग्मुः। द्विजानाः ञ्खलप्वोश्च सान्वयम् वैरं सञ्जातम्। वैरशोधनाय च 'द्वावयोः प्रबलम् तिष्ठतु' इति कथयित्वा अन्योऽन्योपरि पतिताः। महद् वैशसञ्जातम् गृहाणि च भस्मीभूतानि ॥

'परंतु न कोऽपि अस्मान् प्रति प्रचलितः। न कोऽपि अस्मद्गृहम दहयत्' अहमपृच्छम् सकौतुकम्।

'अहम् वर्णसङ्करः। मम पिता एको द्विजः एकस्यां खलपूकन्यायामासक्तोभूतस्तामुदवहत्। तस्यामहम् जातः। नाहङ्खलपूः नाहम् द्विजः। अतो न कोऽपि अस्मानाक्रामत्' स प्रत्याह।

सर्वत्र शांतिः व्यराजत।

तस्माद् गृहान्निष्क्रम्य अहम् स्वगृहमायातः। विचारे च पतितोऽहम्। अस्य वर्णसङ्करस्य गृहे आत्मानङ्गोपायित्वा अहञ्जीवनमरक्षम्। एव वर्णसङ्करो मम प्राणरक्षकः संवृत्तः। ममायम् जीवनदाता। साक्षात् परमेश्वरो भूतलमवतीर्णः। न स शिलास्तम्भो व्यर्थमेव तत्रोच्छ्रितः। अस्मिन् शिलालेखे सकलजगतो बुद्धिमत्ता सारूपेण संगृहीता। अस्मिन् शिलालेखे निखिलसृष्टेः प्रज्ञावत्ता परिमिताक्षरैः

निचुलिता चुलुकमात्रे सन्निवेशिना। न मुधैव तत्रोक्तं 'ॐ नमो भगवते सङ्कराय। सङ्कराय नमोनमः' ॥

मम अवकाशावधिरागच्छत् । मासतमोऽयम् दिवसः। वेतनम् सर्वं व्ययितम् । श्वो महति प्रत्यूषसि उत्थाय शीतवायुना आप्यायितोऽहम् कार्यालयङ्गतः। समुच्छ्रायमीप्सन् वृत्तिकार्यं कुर्वन्नपि नाहम् व्यस्मरम् शिलालेखम् । सर्वाग्रणीः बुभूषुः यथा लोकाः मम नाम कीर्तयेयुः यथा च राज्याधिकारिणाञ्चक्षुः मयि आरोपितम् स्यात् तथा यत्नम् आतिष्ठम् ॥

एकदा केचिद् राज्याधिकृताः जाबालिनगरम् आगच्छन्। अहम् तेषां मनः प्रीतिपरं कर्तुं तेषां मांसभक्षणाय राजाकल्याणगुणवद् एकम् मांसखण्डम् प्रेषितवान्। ते च सपदि मामाहूय इत्यपृच्छन् –

'त्वम् उपहससि अस्मान् ? एको मांसशकलोऽस्मभ्यम् प्रेषितः। किमेतद् अस्मद् उदरपूरणाय पर्याप्स्यति ?' इति ते ऊचुः।

'किमन्यैः एतस्माद् बृहत्तरः खण्डः प्रेषितः कोऽपि ?' अहमपृच्छम्।

'न केनापि किमपि प्रेषितः।' ते प्रत्यूचुः।

'तदा तैरुपहासः कृतो मया वा ?'

पुनस्तानपृच्छम् 'यूयम् सर्वोपरि नियुक्ता ममोपरि एव केवलम् ?'

'सर्वोपरि।' ते प्रत्यब्रुवन्।

यूयम् सर्वेभ्यः करं गृह्णीथ मत्तः एव केवलम् ?'

'सर्वेभ्यः।'

'तदा किं न सर्वेभ्य एकैकम् मांसखण्डं याचध्वे ?

एवम् मांससंभारानवाप्स्यथ' इत्यहमब्रवम् ॥

ते कोपस्मिताः मयि दृष्टिं निधाय मां व्याकुलयन्। तदा प्रभृति मे मनः न भयः संशयित एवासीत्। तेभ्यः किमपि दुरितमाशंकनीयमित्येव मे मनः अनुवेलम् मामबोधयत् ॥

एकदा एको राज्यकर्मचारी कार्यालये मां प्रापत्। 'अयि! किमिति त्वया नगरस्य सर्वे जरठाः प्रवृद्ध-वयाः स्थविराः शिथिलाङ्गाः भृत्यत्वे नियोजिताः। अन्ये च सेवानिवृत्तिवयःप्राप्ताः न सेवाकार्यं निर्वर्तिताः। ते तु लेखाहारककार्यंकर्तुमक्षमाः। पत्राणि वण्टयितुम् गृहाद् गृहम् सुदूरमध्वानङ्गन्तुमक्षमाः ते गलिताङ्गा सर्वाणि पत्राणि स्व गृहे निक्षिप्य जलपानं कृत्वा आयान्ति। तथा ते न्यः पत्राणि चुल्हौ निक्षिपन्ति। अस्माभिस्तु असंख्यानानि आवेदनानि लोकेभ्यः प्राप्तानि यत् तेभ्यः प्रेषितानि पत्राणि नाऽनुवन्ति। एकदा एको जनः स्वम् मित्रम् दृष्ट्वा अपृच्छत् 'मया भवते पत्रं प्रेषितम् मम पुत्रस्य विवाहः आगामि-मासस्य सप्तम्यां तिथौ निवर्तयिष्यते। भवान् किं नायानः?' स प्रत्याह 'अहम् पत्रं न प्राप्तवान्।' अन्ये अहनि यदा स मूत्रोत्सर्गाय एकस्य लेखाहारकस्य गृहाद् बहिः उपाविशत् तदा स एकं दग्धं पत्रं तत्र पतितमद्राक्षीत्। दग्धपत्रस्य अक्षराणि वाचयित्वा स सम्यग् व्यजानाद् यदिदमेव तत्पत्रं यन्मम मित्रेण मह्यम् प्रेषितम्। स तु नगरपालाय सर्वं न्यवेदयत्। नगरपालस्तम् लेखाहारकमपृच्छत् कथं त्वमिदम् धनम् प्राप्नोः: तस्य गृहस्य अभ्यन्तरे पर्यवालोकयत्। पत्रपुञ्जांश्च यत्र तत्रापश्यत्॥' इति

किमहङ्करोमि। महाराजनागसेनस्य शिलालेखस्य इमां प्रतिज्ञां 'वलिभृतः सुखस्मृद्धिम् भोदर्यंति। स्व पदात् न ते प्रच्यावयिष्यंत' एव अहमवितर्थीकरोमि। अतोऽहम् वृद्धान् स्थविरान् वलिभिराक्रांतमुखानेव व्यापृतिं ददामि। अन्यांश्च तादृशान् सेदानिवृत्तान् न ददामि। 'ते स्व पदात् न प्रच्यावयिष्यंती' इति तस्य प्रतिज्ञामादृत्य महाराजनागसेनँ पालितसङ्कल्पङ्करोमि इत्यहमब्रवम्।

तं स्व पदात् प्रच्यावयिष्यँते न वा त्वम् तु प्रच्याव यिष्यसे एव इत्युक्त्वा स कोपेन लोहितको मां अधिकारिपदात् पृथगकरोत्। अहञ्च वहुविधां वचन रचनाचातुरीमाश्रित्य तँ प्रासादयम्। परंतु मम वचन रचनया न स प्रसादँ नीतः। कथँ स प्रसादं यास्यतीत्यहम् अद्यावधि न जानामि। तदाहम् शिलालेखस्य इमानि अक्षराणि अस्मरम् 'विद्वान् अरीन् करोति'।

विद्वान् अरीन् करोति अन्येषु स्पर्धासूयाजननेन किमन्येन कारणेन वा इत्यत्र नासत्यम्।

विद्वानरीन् करोति यथा लोकाः धूमशकटँ दृष्ट्वा अयँ शकटो महाविद्वान् देशस्य कोणे २ भ्रमितवान् देशस्यैकैकम् नगरं ग्रामँ दृष्ट्वा देशस्य एकैकस्य नगरस्य ग्रामस्य पुरस्य च वृत्तांतजानाति इति कृत्वा सत्वरं तमारुह्य तस्य पृष्ठभङ्गम् चिकीर्षन्ति॥

अतोऽहम् भिन्नहृदयः सर्वं तत् शिलालेखशासनँ स्मरन् तत्पदात् प्रमाष्टुमारब्धः॥

... * ... * ... * ... * ... * ... * ...

एकः स्तेयी कस्यचित् कुक्कुटीम् स्तेनयित्वा गृहमानयत्। तस्य गृहे काश्चित् पालिताः कुक्कुट्योऽप्यासन् तासां मध्ये स तां व्यसृजत्। दैवयोगाद् अन्येद्युः तस्याः कुक्कुट्याः स्वामी पथि गच्छन् तां आत्मनो चोरितां कुक्कुटीम् स्तेनस्य कुक्कुटीनां मध्ये तस्य गृहे जालके स्थितामपश्यद् आवेदयच्च नगरपालाय चोराय शापान् मुक्त्वा। नगरपालः तेन सह तत्रागत्य आह्वयत् कुक्कुटीचोरं गृहाभ्यंतराद् अवोचच्च तम् कुक्कुटीस्वामिनम् 'अस्य समक्षम् सर्वं वृत्तांतङ्कथय।'

'इयम् कुक्कुटी अनेन मद्गृहाच्चोरिता। नास्तीयम् अस्य कुक्कुटी' स प्रोवाच।

'किमत्र प्रमाणम् ?' नगरपालोऽप्राक्षीत्।

इयम् कुक्कुटी अत्र नवागता इति स्फुटं प्रतीयते। सर्वाः अस्य कुक्कुट्यः ताञ्चञ्च्वा ताडयंति। अतोऽनेन कस्यचिच्चोरिता कुतश्चित् क्रीता वानीता। यदि क्रीतास्ति तर्हि ब्रवीतु कुत्रेयम् क्रीता कियता अर्घेण च इति स वचो वितेने।

किं तवोत्तरं ? यदि न सत्यम् ब्रवीषि मत्क्रोधवह्नौ शलभायिष्यसे। स्वावस्थानमत्यन्तं विलोप्स्यसि कारावासे च प्रेषयिष्यसे इति रूक्षं तमवादीन्नगरपालः।

चौरो चेतसि तस्योत्तरं विचिन्त्य साक्ष्यप्रदानाय कस्यापि नाम दातुमक्षमः 'भगवन्! यन्मया अजानता किमपि कृतं तत्क्षन्तुमर्हसि। परंतु एकः प्रश्नो मे जिह्वाग्रे स्फुरति। तं पिपृच्छिषामि। पश्चाद् यद् युक्तं तत्समादेश्यम्' इति सविनयमवादीच्चौरः।

'पृच्छ' नगरपालोऽब्रवीत् संस्तभ्य कोपम्।

'यदि कश्चित् समुदाचारमुच्चरते अपरमर्थाद्

वञ्चयितुमीहते कस्यचिद्वस्तु चौर्येण अपहृत्य गच्छेद् मार्गे च तस्य धर्मबुद्धिर्जागृतः भवेत् धार्मिकभावनोद्रेकश्च जायेत स्तेयञ्च पथि विहाय आगच्छेत् किं स चौर इति कृत्वा बंधने निपात्यः ? किमत्र मन्यते भवान् ? इति चौरोऽप्राक्षीत्।

नासौ चौरः। न सोऽवगीयते। स आत्मानम् अशोधयत्। स वृजिनाद् विरम्य प्रायश्चित्ती भूत्वा आत्मानमपावयत्। स तु निर्दोष एव। तत्सन्नहम् साधीयो वर्तिष्ये। तस्यार्थे सुखोपनिपात एव' इति समाश्वासयन्नगरपालः।

'प्राज्ञस्य बुद्धिः व्यसनेषु याति। जुक्रसमाचारवद् अहम् इमां कुक्कुटीमस्य गृहाच्चौरयित्वा आनीतवान्। यदाहम् इदम् वीथिकामुखम् प्रापम् तदा मे मनसि सात्विकभावनोद्रेकश्चाजायत। नाहम् साधु कृतवान् इति ध्यात्वा कुक्कुटीम् तत्रैव विहाय स्वगृहमागच्छम्। यत्रास्याः इच्छा स्यात्तत्र गच्छेत्। पश्चाद्यद्भवत्तत्र दुर्बोधः दुरवगम्यश्च भवता। जानात्येव भवान् अयम् कुक्कुट्याः स्वभाव एवास्ति यदि सा कुत्रचित् कुक्कुटीः पश्यति तासु संमिलति। इयम् कुक्कुटी मम कुक्कुटीः वीथ्याञ्चरतीः दृष्ट्वा आगत्य ताभिः सह अमिलत्। सायाह्ने ताभिः सह मे गेहमागच्छत्। नाहम् प्राप्तदोषः। नाहम् अनुचितं समाचरम्। किं कथयति भवान् ?' इति चौरः॥

ॐ

# वेदं गौरवम्

बाल्ये यदाहमानुचलनयोग्यः सञ्जातस्तदा इतस्ततो लुठतो जानुगत्या चलतो मे श्रुतिपथमायात् कादाचित्कतया वेदमंत्रोच्चारणध्वनिः प्रातिवेश्यस्य गृहात्। तदाहमानुद्वयेन रिङ्गणं कुर्वन् तत्र गत्वा सर्वं तद् दृश्यमपश्यम्। एकः क्रतोः प्रयोक्ता अनुष्ठाता वेदिमभिषेकजलाप्लुताम् कृत्वा हवनकुण्डे काष्ठानि चित्वा दीपशलाकया कर्पूरं प्रज्वाल्य समित्सु न्यधात्। वेद्यामग्निम् निधाय मंत्रांश्चोच्चारयामास। तदा समिद्भ्यः प्रधूमितोऽग्निरुत्थितो वीजनेन वीजितः समित्सु प्रासरत्। तदा एको वेदविदांवरोऽग्नि समिद्भिः संतर्प्य वेदमंत्रपठनञ्चकार। उदर्चिषः कृशानोरुदियाय धूमः। धूम उपरितनवायुमण्डले सर्वत्र प्रासरत्। यागं वितन्वत्सु एकोऽग्नौ घृत-विसर्गञ्चकार। अन्यः समिधोऽनलाय विससर्ज। एतेन हविर्भुजस्तेजो मुमूर्छ अग्निश्चोन्नतज्वालो बभूव ऋत्विगेकः समिद्धेऽग्नौ हवनसामग्रीं चिक्षेप पावकश्च उच्छिखो बभूव। तदा अन्यः सम्भृते शिखिनि समिध आदधौ। वेदमंत्रानुदचारयत्। वेदमंत्रोच्चारणध्वनिः व्यश्नुवानो दिगंतरानुदचरत्। समिद्धोऽनलः एधांसि भस्मसादकरोत्। अंतेऽनलम् शमयांबभूवुः यज्ञञ्चाजह्रिरे महाङ्गारकुण्डतारश्च वहिः प्रक्षिप्तवंतः। विधिना इष्टिश्च विहिता॥

तदावस्थायां मया वेदानां पठनपाठनं समुपक्रांतम्

यदाहम् प्राधीत् आसम् तदो वेदाध्ययने दृंतनिपीड़नञ्चासहम् अहम् मनःप्रसादेन । वेदपाठयानि रटन् अहं वेदाध्ययनसामर्थ्यमुपचेतुम् यत्नं व्यधाम् । अन्ये दुर्वृत्ता बालकाः चापलान्न व्यरमन् अन्यत्रमनसो भूत्वा सांराविणं व्यदधुः पाठे मनसा नाधीयत पाठकस्य शिक्षणेऽनवधानाः अन्यमनस्काश्चाभूवन् । तदाहमवहितचेतः पाठे मनः समाधाय वेदार्थागमं अकरवम् । यदापि अध्यापको मंत्रहृदयं विवरीपति स्म मंत्रमर्थापयति स्म तदाहमवधानं दत्त्वा तस्य वचोऽश्रृणवम् विषयव्याचक्षाणं न कदापि अंतरा प्रत्यावधाम् । एवं वेदार्थग्रहणाय अन्येषामपेक्षया अलंतरोऽभूवमहम् । चतुर्भिर्वर्षैः अध्ययने प्रावहम् नाहङ्कलामात्रमपि मुधा उपायुञ्ज । एवं वेदं सम्यक् ज्ञातवानहम् । यदाहमपश्यम् मम प्रातिवेश्येन वेदमंत्रैरेव अस्तावि अप्रार्थि समुपासि च तदाहमपि तथैव कर्तु प्रारब्धः । विधिवत् प्रक्रांतमध्यापनं न कदापि प्रत्यहन्यत । वेदोक्तीः अशीलयम् । यदाहम् वेदार्थावगमे काठिन्यमन्वभूवम् तदाहम् भाष्याणि कतिपयानि अक्रीणाम् येभ्यो वेदार्थावबोधे सारल्यं भवेत् । व्याख्यागम्योऽखिलो वेदः । व्याख्यासाहाय्येन वेदार्थम् सर्वमुक्तानम् । यः कश्चित् प्रौढगम्यो विषयः स कालक्रमेण मे बुद्धिपथमारोहत् । क्रमेण वेदेऽधीती जातो वेदार्थप्रतिपत्ता बोधितयाथार्थ्यो चाभवम् । विरलाः एव मादृशा नेदिष्ठा वेदेऽभवन् । यावज्जीवं वेदे जागरिष्यामीति च प्रतिज्ञामादधाम् । अपि कुर्वाम् वेदप्रचारमिति च निरचिनवम् उताधीयीय प्रतिदिनं वेदान् इत्यपि च ॥

एवँ वेदविहितसुकर्मानम् समुपगम्य असत्यस्य क्षयाय वेदानाँ परमात्मनो वाङ्मयत्वमजस्रमुद्घोषयितुमहँ प्रायते। यथा लोकाः वेदमतमास्थाय वेदविरुद्धस्वमतँ घृणीयुः असत्येन संश्लिष्टानां स्वमतस्य अलीकग्रँथानां पठनँ पाठनञ्च विजह्युः दुरभिमानँ विधूय वेदमतोन्नतिं ध्यायुः तथा यावज्जन्म यत्नमाधातुमनलसोऽभवम्। यथा ते मिथ्यात्वदूँतोऽन्यमतस्थाः ये साधूनां व्यवहारात् भ्रामत्वा जनान् विमुखीकुर्वन्ति निजशिष्यांश्च विदधति निजमायाप्रपञ्चश्चानकविधयुक्तिभिः वितन्वँति सर्वं तद्विहाय वेदँ पुरणीयुः वेदानधीयीरन् वेदे विश्वस्युः तथाहम् भाषणलेखनादिव विधविधचेष्टाभिः कर्मणि रतोऽभवम्। यथा मम कथनम् व्यवहारेण न विरुध्येत तथा कार्यनिष्पत्तेऽपि अविश्रांततया उद्यमँ विहितवानहम्। वेदार्थान् अपप्रथम्। यथा च लोकः वेदधर्मम् अञ्जसा विद्यात् अस्य महिम्नि च परिगृहीतार्थो स्यात् भ्रमगर्त्ते न संपतेत् पथप्रच्युतो न भवेत् तस्य संशयोच्छेदश्च जायेत तथाहम् प्रत्यहम् अचेष्टे॥

वेदानाम् गौरवम् विकरालकालेन कवलितम्। वेदानाम् प्रचाराय अहम् वेदविद्या इति संज्ञम् एकम् पाक्षिकम् पत्रम् प्रावर्तयम् येन जनानाम् हृदयेषु श्रेयस्यो भावनाः परिस्फुरेयुः श्रेष्ठाः संस्काराः एवलायेरन् तेषाम् हृदि शुद्धा विचारधारा वहेत् वेदानाम् अखण्डनीयाः सिद्धांताश्च सर्वत्र प्रसरेयुः लोकाः उत्तमाङ्गति विंद्रन् विगतकल्मषाः भवेयुः आत्मानम् पवित्रयितुम् क्षमेरन् लब्धपूर्णपवित्र्याश्च सानँदजीवनँ यापयेयुः। लोकान् वेदमतँ ग्राहयितुम्

च अनेकविधाभिः परिपाटिभिः प्रभूततरविस्तारेण भृशम् प्रायते ॥

यथा ह्ययम् आकाशः सर्वभूतेषु पुरातनतमः ! 'तस्माद्वा एतस्माद् आत्मनः आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्याः ओषधयः । ओषधिभ्योऽन्नम् । अन्नाद् रेतः । रेतसः पुरुषः । स वा एष पुरुषोऽन्नरसमयः (तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली अनुवाक १) यथा च आकाशः सदा अविकृतरूपेण तिष्ठति अन्याश्च पदार्थाः तत्त्वाः परिणमन्ते आकाशश्च सर्वत्र व्याप्नोति तथैव वेदोऽपि ग्रन्थेषु प्राचीनतमः । स्वरपाठक्रमपाठघनपाठादिभिः अविकृतरूपेण स्थितः सर्वत्र जगद्व्याप्तुमर्हतीति मे दृढतरो विश्वासः । अन्ये ग्रन्थाः वेदेन पश्चात्कृताः । वेदानाँ पुरतो नावहँति पिपीलिकासाम्यमपि इति मे मतिः । पुण्याः भावनाः अस्मिन् ग्रन्थे ओतप्रोताः सुनिपुणम् संनिहिताः संति । मानवसभ्यतायाः आधारशिलास्वरूपाः वेदाः । यत्र ज्ञानस्य पराकाष्ठा विश्राम्यति स वेदः । सर्गप्रादुर्भावकाले प्रवृत्ताः अतस्तान् स्व प्राणान् अपि दत्त्वा रिरक्षयिषामि ॥

एकदा केचिद् अन्यमतीयाः एकत्र भूत्वा माम् द्रष्टुम् समागताः । ते च माम् ऊचुः किमिति भवान् वेदान् आकण्ठपूर्णोदरं प्रशँसति? वेदाः भण्डधूर्तकल्पैः मानवैः निरमायिषत् । भवतो विचेष्टितम् तु बदरीफलविक्रेतृशाकाङ्क्षावत् या हि अम्लान्यपि आत्मनो बदराणि मिष्टानि परस्य मिष्टानि अपि अम्लान्यपलपति । भवान् आत्मानम् तत्त्वज्ञानिनम्

अपरांश्च अतथाभूतान् प्रकटयति । कूपदेष्टा इव भवान् । भवतः कथनं प्रमाणविवर्जितम् । भवान् लोकान् स्वमतानाये सम्पात्य किमपि स्वार्थसिद्धि चिकीर्षति । भवान् जनान् स्वपाशे निपातयितुमीहते असंबद्धञ्च प्रलपति । भवतो वेदोऽस्माकम् ग्रंथम् कल्पनया वार्त्तया विशिष्यते । भवान् स्वसिद्धतां प्रसारयितुमभिवाञ्छति । वयम् तु वेदमतम् दूरतो नमस्कुर्मः । एतादृशे मताय स्वस्ति भूयात् । अतो ऽस्माकङ्खण्डनतो विरतिं विदधातु भवान् । अस्माकं धर्मस्य सत्यत्वविषये न भवान् संदेग्धुमर्हति इति ते एकस्वरेण ऊचुः ॥

छिद्यतां बहुभाषणम् । न भवन्तो गुणदोषौ परिच्छेत्तुमर्हन्ति । वेदमतस्य भवन्मतस्य च समुद्रपल्वलयोरिव अंतरम् । भवन्मतम् भ्रमविलसितम् । भवतां स्वमतसमर्थनं निरर्थकं केवलं विक्षिप्तमम् । भवन्मतं कल्पितं नूतनमधर्म्यमग्राह्यञ्च । यूयम् शोचनीयाः कुबुद्धयोऽनर्गलम् वेदान् अनिन्दत । भवन्मतं कल्पनाजालप्रसूतम् । भवन्तो व्यर्थं वेदान् कलङ्कयामासुः । अविमृश्यैव वेदान् निन्दितुम् प्रवृत्ताः । वेदम् विगर्हन्तो भवन्तो दुःखीयन्ति । युष्मन्मते बहवोऽसारवार्त्ता वर्तन्ते । युष्माकं मतं निरयं गच्छेत् विभावयेत् धीमान् । यूयं नितराम् अधमा अतितरां शोच्यध्वे । यूयमलीकधर्मवन्तः । तमसावृता यूयं यावदायुः अंधकारे विलीनाः । कल्पनाप्रसूतं भ्रमजालं भवन्मतम् युष्माभिस्त्वयं प्रपञ्चो मुधैव परिकल्पितः । युष्मन्मतं लोकान् विपथे निपातयति । युष्मत्कथनं उन्मत्तप्रलपितमिव । यदि भवन्तः स्वपन्ति चभ्रमं बुद्ध्वा अविदितञ्च

धारं सुखसम्पातमनुभवितुमिच्छंति नहिं वेदम् आ-
श्रयन्तु वेदमते विश्वसंतु इत्यहं उच्चस्वरेण अदोचम्
वेदाः सृष्टेः आदिकाले प्रणीताः। तदानीन्तनी
अवस्था इदानींतन्या अवस्थाया नितरां भिन्ना। अतो
वेदेषु प्रतिपादिता राद्धांता उपयोगितां नार्हंति,
अतो वेदधर्मो व्यलीकताङ्गतः। अस्माकं मतं तु नूतनम्
अतोऽस्माकं मतं परिवर्तितस्थितेरनुकूलम्।
अस्मन्मतस्य उपयोगिता भृशं समेधते। वेदमतं तु
इदानीं प्रमाणपदवीं नारोहति। को वेदमतेऽधुना
प्रत्ययमादध्यात्। कोऽपि मन्दमेधा एव वेदेषु इदानीं
विश्वस्यात्। 'वेद वेद' इति घोषणं भवतः पक्षपात-
त्वमेवाभिव्यञ्जयति। भवान् असम्भाव्या वार्ताः
प्रलपति। को वेदेषु कथितानि असम्भवार्थानि
मंतुम् शक्नोति? इत्युक्त्वा ते वाचमुपसमहरन्॥

'अयि मुग्धभ्रातरः! अत्र मनागपि नावहितं
भवद्भिः। इदं भवतां युक्तिविवर्जितम् वचः! बाल-
प्रलपितमिदम् भवतां बालिश्यमेव द्योतयति। निर्बंध-
जुषां बालमतीनां भवताम् इमे मृषा प्रलापाः प्रामाण्यं
नार्हंति। उत्पथप्रवृत्तानां भवतां वचःसु न कोऽपि
प्रबुद्धमना हितं पश्यति। अंधविश्वासमापन्नानाम्
युष्माकञ्चक्षूंषि तिमिराच्छन्नानि। कथं यूयम् वेद-
राद्धांतानां समौचित्यविषये एवं संशेध्वे? इदं तु
युष्माकम् अज्ञानविजृंभितमेव। अवधत्त! समाहित-
चेतसा च शृणुत भ्रातरः, वेदा सृष्टेरादिकाले
परमात्मनो प्रकटिताः। वेदास्तु साक्षात् परमेश्वरस्य
वाक्यम्। परमेश्वरः त्रिकालदर्शी। स सम्यग्
जानाति यत् कालांतरे को नयोऽसत्कृते उपयोगितां

आनन्दयति। वेदेषु प्रतिपादिता नयाः न विकल्पँते। सूक्ष्मधिया विचारणेन इदँ अवगँस्यते यद् वेद वचनानि अधुनातने समये मृषात्वम् नापद्यँते। वेदानुशासनमभिलाषमपारीत् । यो वेदानुशासनम् अवाधात् स प्रामोद्त अनँतरायम् हितञ्च प्राप्नोत्। वेदस्तु क्रमिकसमुत्कर्षे साधकतमङ्करणम् । कालपर्यंय वेदानां लाभदायकत्वम् न ह्रसिमानमापद्यते। प्रयोजनवत्तां साधयितुम् वेदाः सरलाम् पदवीं प्रतिपादयँति। यथा क्लेशाः परिहीयेरन् जीवनसौख्यम् न प्रतिहन्येत वेदाः तथा मार्गमादिशँति । अद्यतने समये भौतिकवादस्य भूयसी चर्चा। जना भौतिकः वादम् प्रति अभिरुचिम् विदधति। भौतिकवादस्तेभ्यो ऽनितरां रोचते । फलाभिलाषो हि प्रयोजयति प्रवृत्ति लोकेषु। पारलौकिकमदृष्टम् तु को जानाति? ऐहिकसुखम् प्रयोजकतरम्। अतो यो धर्मो तेषामभीष्टम् पूरयेत् यो तेषाम् इन्द्रियाणां चाञ्चल्यम् न दाम्येत् यश्च तेषां विषयसुखव्याघातँ न कुर्यात् यमाश्रित्य च तैः व्यसननिवृत्ति क्रियवृत्तिभिः न भवितव्यम् तमेव धर्ममाश्रयितुम् ते काङ्क्षँति। अनेन विचारेणापि वेदो युष्माकम् धर्मग्रँथान् सहस्रगुणमतिशेते। विषयसुखे आत्मानम् आसञ्जयितुमपि शोभनतरा अत्र प्रणाली निर्दिष्टा विद्यते ॥

आधुनिका जना मदिराम् कथमभिलषँति? सुरा कथम् तेभ्यो रोचते ? सुराम् दृष्ट्वा कथम् ते तस्याः तर्षन्ति ? परंतु तेषां इदङ्कर्म लोकेषु कुत्सां प्रयोजयति भूयसां देशानाम् विधानमपि सुरापानँ निवारयति। परंतु वेदोऽभ्यग्रहणेन नूनम् हीयँत्रणाम् विना सुरा-

पानङ्कतु पारयथ । वैदिककाले लोकाः सोमपानम् कुर्वन्ति स्म । सोमस्य वर्णः सुरासदृशः एव । यदा यूयम् सुरापानम् चिकीर्षथ लोकश्च युष्मान् पशून् तदा सुराकाचकूपीं धुरतो निधाय

ॐ सोम गीर्भिष्ट्वा वयम् वर्द्धयामो वचोविदः । सुमृडीको न आविश ॥(ऋग्वेद. १ – ६ – २१ – ११)

ॐ सोम रारंधि नो हृदि गावो न यवसेष्वा । मर्त्य इव स्वओक्ये ॥(ऋ० १ – ६ – २१ – १३)

ॐ गयस्फानो अमीवहा वसुवित्पुष्टिवर्द्धनः । सुमित्रः सोम नो भव ॥ ऋ० १ – ६ – २१ – १२)

इमान् मंत्रान् उच्चार्य सुरापानं कुरुत । इमे सोमपानम् कुर्वन्तीति मत्वा लोका युष्मद् विषये किमपि कलुषचिंतनम् न करिष्यंति । एवम् निःशेषपीतोऽस्मान् त्वकान् त्यक्त्वा आनन्दम् विस्तारयत ॥

अन्यच्च । धूमपानमपि कथं विगर्ह्यते लोकैः । धूमपानाय लोका परिग्लायंति स्म । परंतु यदा प्रभृति भारते आङ्गलशासनम् बभूव भारतीयैश्च आङ्ग्लानाम् आचाराः अङ्गीकृताः तदाप्रभृति अस्मद्देशीयाः धूमपानरीतिना वशीकृताः । अखिलाहः सिगरेटेभ्यो धूमं निःसारयंति । इति तेषाम् दैनिकक्रमः । धूमपानासक्तिः फुप्फुसेभ्योऽनर्थकरी । धूमपानप्रसक्ताः तेऽपीयः एव जीवनांतङ्गच्छंति । परंतु धूमपानप्रसक्ता नराः भोजनम् विना कालं नेतुं पारयंति न तु धूमपानं विना । तेषामर्थे ममायम् प्रस्तावः ॥

तैं लोकेषु प्रथयंतु यदस्मासु सिगरेटेषु नास्ति तमाखू पत्रचूर्णं अपितु तवनसामग्रीचूर्णम् । यथा केचित् प्रभुभक्ताः सायं प्रातः संध्यावन्दनमेव नाहं मन्यते

अपितु अनुत्तणँ प्रभुध्याननिलीनाः मालां करे गृहीत्वा तस्य नामजपम् कुर्वंति एवमेव वयमपि निखिलाहो हवनयज्ञम् वितन्मः। स्वकथने विश्वासमुत्पादयितुम् न यदा ते सिगरेटम् दीपशलाकया प्रज्वालयँति तदा ते इमँ मँत्रम् सस्वरं उच्चारयेयुः –

ॐ अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिसि ॥

अर्थ :– हे अग्नि आगच्छ त्वम् स्व स्तोत्रि आनन्द-प्रदानाय ... ... ... ...

युष्माकँ धर्मपुस्तकानां वेंदसम्मुखे का परिगणिति युष्माकम् धर्मग्रँथा वेंदस्य किम् ? वेद एव सर्वे ग्रँथानां धुरि प्रतिष्ठापयितव्यः। वेदे विश्वासम् विना भवँतो विफलयँति आत्मनो पावनम् जन्म । वेंदस्य उपकाराः पारे वाचां वर्त्तमानाः कम् न वैदिकधर्मा: अहमहमिलङ्करिष्यँति ? विचायम् २ अपि नाहम् विभाव यामि दोषलेशमपि वेंदेषु वेंदो न केंनापि पुस्तकेन अतिशय्यते। ये प्रमत्तमनसः पुरुषा येषाञ्च मतयः कुब्जगामिन्यो भवँति ते वेदान् मिथ्यादोषैः दूषयँति।

आधुनिकविचारदृष्ट्या अन्यत् पश्यँतु भवँतः इदानींतने युगे लोकाः तँ धर्ममाद्रियँते यः सर्व-व्यापको भवेत् यः सर्वेभ्यो गुणावहो लाभकारी च स्यात् यस्मिश्च जातिभेदाः श्रेणीभेदाः देशभेदाः उच्चावचाः सर्वे भेदा विलीयेरन् यश्च न पुरुषविशेषम् आद्रियते सर्वेषां लाभाय समानमुपदेशम् ददाति। एतया दृष्ट्या विमृश्यमानेऽपि न कोऽपि वेंदतुलाँ आरोपयितुँ शक्यः । चौरस्य साधोश्च एकरसेन उपकारी ॥

यथा वयम् हवनयज्ञसमये परमात्मानं स्वीरामपोषं अनुनाथामः हवनकुण्डे अग्निं प्रज्वाल्य साहुतिक्षेपणम् इमं मंत्रम् पठामः –

ॐ अग्ने नय सुपथा रायेऽस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम॥ (यजुर्वेद. अ. ४० – मं. १६)

अर्थ :- हे अग्ने अस्मान् धनप्राप्तये शोभनेन पथा नय ... ...

एवमेव तस्करोऽपि यामिन्यां चौरिकार्थे कस्यचित् गृहम् प्रविशन् अंधकारे दीपशलाकां ज्वलयित्वा गृहस्वामिनो धनम् गवेषयन् इममेव मंत्रम् पठन् –

ॐ अग्ने नय सुपथा रायेऽस्मान् ... ...

यथा अन्येषु मतेषु मोहविलसितं मौर्ख्यस्खलितं अज्ञानपङ्कनिश्च वर्तनं न तथा वेदे। कथं यूयमनपायम् इच्छंतो वेदानुयायिभिः सह शात्रवमाचरथ वेदपद्धतीं नानुसरथ? अस्मान् वेदानुयायिनः प्रतिपादयध्वे परस्परसङ्घर्षञ्च कुरुथ। अस्मिन् युगे स एव धर्मः सादरतरं वीक्षणीयः यः शांतिस्थापको भवेत्। विविधधर्माश्रयिणां कियन्तो मिथः आजयः सञ्जाताः। आहवेषु शस्त्राशस्त्रि बाहुबाहवि अयुध्यंत। अङ्गारप्रतिमनयनाः कोपस्फुटिताधराः अन्योन्यमहिरिवन् मिथोऽभ्ययुञ्जत उपाद्रवन् अन्योन्यस्य मर्माण्यकृंतन् प्राणानुदकृंतन् अन्योन्यम् पर्यतापयन् परस्परं तैक्ष्ण्यं अभजंत कदनञ्चाकुर्वन् अन्योन्यस्याङ्गानि आग्नेयगुलिकाभिरव्रणयन्। ज्वलन्यमानलोचनाः परमतस्थानां संहारञ्चाकुर्वन्। उद्गच्छद्रोषवाष्पाः शत्रुपक्षमवासादयन् कोपाग्निना क्षणहंततयोऽन्योः

न्यस्य हृदयेऽविध्यँश्च . परस्परं युध्यमानानाँ नृत्यतः कबँधाः समरभूमिम् व्याप्नुवन् । अन्योन्यैः सह असंग्रामयँत पराक्रमँत। प्रशाँते उपद्रवे एके अभिः षङ्गविप्रविद्धाः परिम्लानमुखाः संग्रामभूमेः न्यवर्तंत। अपरे सादितशत्रुपक्षाः समुसर्पंती पताकांबिभ्रतःगृहँ आगच्छन्। संमर्दप्रशामँ यावत् कियतां मृत्युरुपनतः कियँतः पराभवाभिभूताः ताड़नाम् लब्ध्वा रणात् पलायिताः कियँतोऽतास्यन् कियल्लुण्ठनश्च विहितम् कियन्ति च गृहाणि धराशायी कृतानि कियताम् कालावसानम् जातम्? इदम् सर्वम् दृष्ट्वा लोकाः एतादृशेभ्यो धर्मेभ्यः समत्रस्यन् ये शांतिभङ्गम् कुर्वंति। अधुनातने काले स एव धर्मः प्रशस्यते यः शांतिप्रवर्त्तको भवेत्॥

कश्च धर्मः शांतिस्थापकः इति प्रश्ने जागरूके सति अस्माकम् उत्तरं तदेव । वैदिकधर्म. शांतिप्रदो वेद एव शांतिस्थापकः। अस्ति वेदे एको मँत्रो यः सर्वेभ्यः पदार्थेभ्यः आगँतुकँ भयम् उपशमयति –

ॐ द्यौ शांतिरंतरिक्षँ शांतिः पृथिवी शांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः शाँतिर्विश्वेदेवाः शांतिः ब्रह्म शांतिः सर्वम् शांतिः शांतिरेव शांतिः सा मा शांतिरेधि। ॐ शान्ति शान्ति शान्ति॥

अस्य मँत्रस्य पठनेन सर्वतो शान्तिः लभ्यते। यदा किमपि भयम् कुतश्चित् उपस्थितँ भवेत् अस्य मँत्रस्य पाठः सर्वं तदुपशमयति शांतिञ्च स्थापयति। न इतरें कस्मिन्नपि धर्मपुस्तके एतादृशो मन्त्रो विद्यते॥

एकदाहँ मध्याह्नसमये मृदुधवलवालुकाच्छादित निष्कर्षेण परितो दृष्टिम् निक्षिपन् व्यचरम्। इतस्ततः

कारेण भ्रमद्भिः शुष्कपत्रैः तृणैः वालुकाकणैश्च इदम् मे स्पष्टीभूतम् यद् अस्तीह वायुदेवता किमपि कर्तुमुद्यता। यदा यातुधानो वर्तुलाकारेण भ्रमति तदा स किमपि यातुकर्म करिष्यतीति निश्चप्रचम्। अकस्मादुत्थितः सिकतानलाद् एको बृहदाकारः पुरुषो धूसरवर्णः। उद्भ्रमता वायुदेवेन अयम् भूतः उत्थापितः इति मया निरचायि भूतः तत्रैव प्रादुर्भूय तत्रैव अंतर्धानम् याति इति हेतोः। बृहतो बृहत्तरो भूत्वा स मद्दिशि आयाति स्म। सामिमूर्च्छादशाम् आपन्नोऽहम् आकाशम् ममोपरि पतन्तम् पृथिवीम् तिर्यग्भूताम् वृक्षान् ममोपरि पततो नदीप्रवाहञ्च स्व दिशि प्रसरंतम् अद्राक्षम्। झटित्यहम् 'ॐ द्यौः शांतिरंतरिक्षम् शांतिः पृथिवी ...' इत्येतावदेव जपित्वा नष्टसंज्ञो घूर्णितनयनो भूमौ पतितः। किम् अकरवम् क्वासम् किमुपनृतम् मे कियन्तङ्कालम् एवम् स्थितः इति किमपि न जाने। परंतु ॐ इत्यारभ्य पृथिवी पर्यंतम् इत्येतावद्भिरक्षरैरेव परमात्मा मम आशयम् व्यजानात्। सर्वम् तदुपद्रवम् प्रशमितवान् कियत्कालम् सम्भ्रांतचेता मूर्च्छायाम् अवास्थिषि इति तु न जाने। परंतु क्रमेण प्रकृतिमापन्नो यदाहम् ततः उत्थितस्तदा क्षितिरम्बरांतः सर्वतो दृष्टिपत-प्रदेशः यथापूर्वमवर्तत। ता एव रेणुकाघनराशयो यत्र तत्र पुञ्जीभूतो वालुकासंदोहः। नान्यत् किमपि। इत्येतावत् शांतिपाठस्य माहात्म्यम्॥'

शास्त्रार्थाय माम् आह्वयमानास्तत्र आगतास्ते इमम् तर्कमाकर्ण्य तस्मात् स्थानाद् विद्रुताः मयि शाद्वापयति अपि न पुनस्तत्र निवृत्ताः॥

# प्रहेलिका

यस्योदरे इदम् सर्वमाकाशम् यस्य च वामभागे श्रीः। सोऽस्ति तीक्ष्णः तथापि नास्ति स तीक्ष्णः न च आकाशः श्रीः वा अस्यास्ति किंतु सः ?

उत्तरं

आस्तिकः (सविचारः) – स तु नरसिंहावतारः। भगवान् नरसिंहावतारस्य शरीरे संक्रमणमकरोत्। परमपुरुषस्य अवतारभूतत्वेन सर्वमिदम् ब्रह्माण्डम् आकाशश्च यस्यान्तर्गतम् यस्य च वामपार्श्वे लक्ष्मीः यश्च प्रखरैः करुहैः हिरण्यकशिपोः उरोविदारं प्रतिचस्करे हिरण्यकशिपुश्च विशारुत्तामापन्नः यश्च परब्रह्मरूपत्वाद् उपनिषत्सु 'नेति नेति'* इति गीतः। न यस्य परिभाषा कर्तुम् शक्यते। यस्य विषये कालिदासेनापि उक्तम् –

> अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
> स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव॥

यस्य रूपम् न परिच्छेत्तुम् शक्यम्। अतो यो तीक्ष्णो ऽपि न तीक्ष्णः इत्यादि। अतो नखरो नरसिंहः एवास्ति अस्याः प्रहेलेः उत्तरम्॥

नास्तिकः (अविश्वासगर्भस्वरेण) – किं भवान् व्यर्थालापेषु सज्जति ? आस्तिकवादः इदानीं प्रलयं प्रयातः। मिथ्यावार्त्ता वितन्यते भवता। खलु इति-हासविस्वपरम्परायाम् एव जनः इदानीं श्रद्धातम्

---

* अन्यमेव तद्विदितादथोऽविदितादधि नेति नेति (कठवल्ली उपनिषद् वल्ली ६ श्लो. १२१ ब्रह्मयोगीभाष्य)

अर्हति। कथं न जीवमास्यते भवता ? नरसिंहस्तु कदापि नाभूदितिहासे। अतोऽस्माभिरपि नरसिंहस्य अभाव एव वांछितः इह। अतो 'नरसिंह' शब्दम् निराकृत्य 'नखर' एवास्ति अस्याः प्रहेलिकायाः उत्तरम् इत्यस्माकं पक्षः। तथा चेदम् –

नखरः एव न + खरः = तीक्ष्णोऽपि न तीक्ष्णः। 'ख' इति शब्दस्तु आकाशवाचकः। 'र' इति धन अर्थात् लक्ष्मीपर्यायः। अतः आकाशः 'नखर' शब्दस्योदरे मध्यभागे वामभागे च रः लक्ष्मीः। अस्माकं यो दक्षिणः अस्माकं सम्मुखीनस्य स वामः इति हेतोः॥

नास्ति ख [आकाश], र [लक्ष्मी] वा अस्येति नखरः। अतो 'नखर' शब्दः एव केवलम् अस्याः प्रहेलिकायाः उत्तरम्॥

आस्तिकः – नरसिंहस्तु भवता निराकृतः।

नास्तिकः – नरसिंहस्तु नरस्य विकृतरूपं निराकृतः 'नराकृतिः' इत्यस्य विकृतरूपं निराकृतः। अतो मया स नराकृतिः निराकृतः। यथायोग्यं व्यवहर्त्तव्यम्। उपकारयोग्यस्य उपकारं कुर्यात् अपकारयोग्यस्य अपकारं विदध्यात्। एष एव सनातनः पन्थाः॥

# हत्या अथवा आत्महत्या ?

पिनाकपाणिः दण्डपाणिः इति द्वौ आत्मजौ आस्ताम् । केदारपुरे पिनाकपाणिः शिल्पस्वामी आसीत् । प्रभूततरं च धनम् इत्थं उपार्जयत् । दण्डपाणिः समाप्ताध्ययनः साहित्यरसिकः सन् संस्कृतसाहित्यम् अनवरतपरिश्रमेण परिशीलितवान् । विद्याध्ययनकालेऽपि स सर्वेषां विद्यार्थिनां प्रथमं उत्तिष्ठति चरमञ्च सर्वेषां संविशति स्म । सर्वैः प्रवीणा तस्य धिषणा । परीक्षासमये विनिद्रस्य तस्य अध्ययने एव विभावरी अयासीत् । न कदाचिदपि तेन अपरः द्धोऽध्ययनकालः । अंधकारप्रसरणाद् आमध्यरात्रम् सोऽध्ययनम् कृत्वा निद्रामगच्छत् । मध्यरात्रपूर्वं निद्रा न समालिङ्गति स्म । अवशिष्टायाम् चतुर्घटिकारजन्यां स शयनाद् उत्थाय पुनः प्राक्रमद् अध्ययनम् यावद् उदपतत् सूर्यः । आशुतरग्रन्थौ स आसीत् प्रदीप्ते तस्य प्रज्ञामेधे । एवमेव कृत्वा स कृतधी समपन्नः । ततः स साहित्यसेवायै बद्धपरिकरोऽभवत् यथा मल्लोऽक्षवाटमवतरति । लेखनकार्ये सुष्ठु अभ्यस्तो न कदापि अपशब्दप्रायमनन्वितं नीरसम् विरसं वा प्रोगयत् । यावदर्थपदानि स प्रायुङ्क्त । न किमपि अनौचिती तस्य प्रयोगेषु अदृश्यत । अक्रमम् असमर्थञ्च न कदापि उपन्यास्यत् । अपशब्दान् सदा अवर्जयत् । न चापि अधिकपदत्वदोषापातः तस्य रचनायां कदापि अदृश्यत । अपदार्थां अनर्गलां व्याकरणनियमविरुद्धां रचनां न च व्यतनोत् ॥

तस्य कनीयान् भ्राता दण्डपाणिः तस्मै भृशमद्वेट् ।

सर्वेश्च पितुर्वित्तराशिमात्मसात्कर्तुमैच्छत् । यस्मिन् गृहे त्रयश्चत्वार इतोऽप्यधिका वा भ्रातरः स्युः न तत्र कोऽपि कस्यापि प्राणहरणाश्चकाङ्क्षत । यतः तस्य मरणेन तस्य पैतृकऋक्थभागोऽन्येषु सर्वेषु भ्रातृषु समं विभजिष्यते किमर्थम् स एव केवलम् आत्मानं प्राणसंशये पातयेत्? परन्तु एक गृहे द्वौ भ्रातरौ अन्योऽन्यस्य मुखं दृष्ट्वा अन्योऽन्यस्य प्राणान् जिहीर्षतः यथा एके लोहपथे सञ्चारिणौ द्वौ धूमशकटौ अन्योऽन्यस्य मुखं दृष्ट्वा अन्योऽन्यम् संचूर्णयतः ॥

अतः स दंडपाणिः चक्रपाणिम् क्रोधदृशा समीक्षते स्म । तमभिशपति स्म असूयाकुलितश्च तं पश्यति स्म । कश्चित् प्रभवः तेन सह विग्रहञ्चिकीर्षति स्म । कालान्तरे भूत्वा स राजनियोगम् अलब्ध । चक्रपाणिमधिकृत्य न ममौ तस्य हृदये मन्युपरिवाहः । चक्रगारिम् दह । अब स निरीक्षते स्म ॥

राजादेशमनुरुध्य स चट्टीग्रहङ्गतः । तत्र एकम् परिष्कृतं परिमृष्टमगारम् प्राकल्पयत् । तत्र च एकेन सेनापतिना सह तस्य सम्पर्को जातः । सेनापतिः कामकृतःस्वैरश्चासीत् । दंडपाणिः स्वभ्रातुश्चक्रपाणेः वृत्तान्तं सेनापतयेऽकथयत् तमधि वह्वीः कथाः श्रावयत् तस्य विप्रतीपं साहाय्यञ्चायाचत । कौधिलस्वभावश्च स निश्चयमात्मनः स्फुटमसूचयत् तस्यैव्यापादनाय तम् प्राचोदयच्च । सेनापतिस्तु स्तब्धश्वसनः तस्यालापमश्रृणोत् अविभेच्च । दण्डपाणेः प्रेरणम् तस्य चेतसि पदं न लेभे । तेन सहैकमत्यम् न सोऽगृह्णात् । निरागसां संहननेन महत्

पात्रम् मयि अवक्ष्यास्यते इति न अब्रवीत् संदेहदोला-रूढया मनीषया । परंतु दँडपाणिना विस्रम्भालापैः प्रक्षालितं तस्य हृदयम् आश्वासश्चोत्पादितः भयञ्च शमितम् एवं दँडपाणिः सेनापतेः प्रत्ययभागभूत् । सेनापतिस्तस्यादेशमङ्गीचक्रे ॥

तेन तथा पराक्रान्तं यथा न कश्चिदपि अतीते वयसि ! पिनाकपाणि संनिहितवाञ्छनो व्यापारम् उत्सृष्ट-वान् । एकदा विभातप्रायायां रजन्याम् उत्थाय शिल्पालयम् मुद्रयित्वा स गृहमागात् । प्रभाते प्रविरलतमसि स गृहम् विहाय यत्र धूमयानानि विरमँति तत्र गत्वा धूमशकटीमारुह्य दण्डपाणिना सह निवस्तुम् बद्रीगढ़ञ्जगाम ॥

अन्यस्मिन् दिने स सेनापतिः निशावसानसमये शय्यां परित्यज्य निद्राकषायाभ्याँ दृग्भ्याम् द्वार-देहल्याम् स्थित्वा पथगामिनो नरान् अपश्यत् । दँड-पाणिना क्रूरकर्मणो आदिष्टस्य तस्य बाहू एजेते स्म शंत्रञ्च दोधूयते स्म । पापसम्प्लुतम् आत्मानम् अपश्यत् सः । गरीयो भयम् तस्य चेतसि पदञ्चकार । राजनियमेन प्रसभमुपभुज्यते स्वदुष्कर्मणाम् फलम् । कथम् कृतस्य अपराधस्य गोपायनङ्कर्तव्यम् ? गृहत्यागमङ्कृत्वा प्राणदण्डम् परिहर्तव्यम् ? राज-शासनाधिष्ठिताः प्रसह्य धृत्वा दँडयँति । एवँ संदेह-दोलामधिरूढ़ः स क्षीणायामपि क्षपायां न किमपि कर्तुम् मनो निदधे । अंतःसारशून्याम् अविचारितः रमणीयाङ्कार्यपद्धतिमारोढुम् सोऽपार्थकमजानात् । एवँविधोऽध्यवसायस्तस्य हृदि भयमजनयत् । सहस्रांशुरांकाशे उदयौ । दँडपाणिना सह कृताम्

प्रतिज्ञां तरीतुम् आत्मानं निरुनीर्णप्रतिज्ञञ्च कर्तुं तस्य आज्ञां संमानयितुञ्चापि तस्य हृदि अभिलाषोऽजनन्त एकम् कामम् अंतः नियमन एव सोऽस्यम् पूरये ॥ तस्य भृत्यो दुग्धधूपादि प्रातराशं परिषेवयितुमारेभे प्रातराशमुपभुज्य स भ्रांतभ्रांतो भूत्वा दंडपाणिम् द्रष्टुम् ययो किमत्र युज्यते कर्तुं इति ज्ञातुम् । स विचिकित्सति स्म मार्गेऽयञ्चक्रपाणिः सुन्वघात्यो न वा ? दण्डपाणेः हृदये वितताऽभूद् अतिपशुता। अन्तर्बाह्यनेत्रः स किमपि अकार्यं पापम् वा न पर्यगणयत्। स्वकार्यपरिगतिं उत्पश्यन् न स वैक्लव्य- मासमाद । दोदूयमानचेता सेनापतिः दंडपाणिम् दृष्ट्वा तेन सह लब्धैकांत्यो मुहुर्मुहुः मुखम् व्यवृणोत् परं भयाद्विप्रचित्तः किमपि वक्तुम् नाशकत् । शब्दोच्चारणात् प्रागेव तस्य वाक् मुखाभ्यंतर एव विलीनाऽभूत् ॥

रिपूद्धरणोद्युक्तो दंडपाणिस्तु तस्य मनो ज्ञात्वा क्षेत्रोपमभवत् । पुनः संस्तभ्य गौपम् स्वमनोरथं अनुचरन् पुनः पुनस्तम् व्यवस्थापयामास । मम मङ्गलस्य प्रतिरोधो मा भूः इत्येव चान्वकाङ्क्ष । पार्श्वस्थ सेनापतिं चितोपरिवर्जनाय उपादिशत् । कालोऽनंतरे आस्तां तावद् अन्याः वार्त्ताः । अयं मम निदेशो पालयितव्यः । दैवविभवोऽस्माकम् शाश्वतो भवेत्यपि । प्रपूरय मम कामनामात्मनञ्चापि इति तं मद्विदिश । दुष्टैराचरितमिमं पंथानमास्थातुञ्च तम् अध्यवसायभीरुम् प्राचोदयत् ॥

एवंविधे कर्मणि प्राणत्यागः संस्थितः एव इति सेनापतिस्तमुवाच ।

"चिरायुः भूयाः" इत्थम् तँ आशीर्भिः अभिवृध्य, "लाघवँ यास्यसि यदि भेष्यसि। लाघवम् नाम बहु मतस्य मरणप्रायः" इत्येवमुक्त्वा विकल्पयँतमपि तँ सेनापतिं "मदपेक्षया इदङ्कर्तव्य मिति अन्वबभ्रात्॥

शङ्काशीलः श्वासम् निरुध्य विमर्शयोर्मध्ये दोलायमानः सेनापतिः किमपि अनर्थमुत्प्रेक्षमाणस्तस्य दँडपाणेः मनोरथम् सनिषेधम् सन्धानः क्षणँ विरम्य तदप्रसादभियो सअँधरकम्पँ पुनराख्यातुमारब्धः—

"दुर्निवारचिंतागृहीतचित्तोऽस्मि सँवृत्तः यद्यहम् मलिनहृदयः केनापि सँधानेन दँडपातनाद् आत्मानँ रक्षेयम् तदापि एताहशम् गूढकौटिल्यँ विरचय्य कलङ्कमलीमसञ्जीवनमिदम् अहङ्कथम् नेष्यामि? न मे मनसः प्रशांतिः भविष्यति इदम् नृशंसम् कर्म विधाय॥"

तस्य शब्दा दँडपाणेः कर्णशुष्कल्योः कटुतां भेजुः किं त्वम् सँशयबहुले पतितोऽसि? प्रचुरवित्तसमागमो भविष्यति। सकलस्य स्वामिनो चावाम् भविष्यंतः। गुणैः कोऽर्थः। उपरतविभवस्य न किमपि जीवनम्। लोके भूरिव्ययया नराः एव सुखम् लभन्ते। व्ययाद् धनम् पेयते। वाक्तुरँगिताः हि प्राणिनाम् व्यवहाराः। इदानीम् प्रतिज्ञाभङ्गम् न त्वम् कर्तुमर्हसि न च सँशयितुमर्हसीति दण्डपाणिस्तम् व्याजहार॥

इत्थम् मुहुर्मुहुस्तेन प्रणोदितः सेनापतिर्विश्वस्तोऽभूत् निश्चितमतिः प्रास्थिच्च केदारपुरं कार्यारंभाय, दण्डपाणेः विश्वासङ्कृत्वा॥

उन्मार्गगामिना तेन सेनापतिना नानुशिश्ये नानु-

शुश्रुवे च। अतिद्विपगङ्कर्तव्यमनुष्ठातुं मनसासंप्रधार्य। अंतरायां पुरि एवासीत् चक्रपाणेः गृहम्। तस्य नेदिष्ठे एव प्रदेशे सेनापतिः अल्पभाटकमगारमेकम् अगृह्णात्। तत्र कुटुम्बोपायभूतमेकम् मुद्रणालयम् स्थापितवान् निवासश्चापि तत्र एव अकरोत् आत्मनः समुचितां सुविधां चाकल्पयत् ॥

चक्रपाणिः स्वलेखनकार्यं व्यग्रः सेनापतेः मुद्रणालयम् निकटतरवर्तिनम् दृष्ट्वा तत्र एव स्व मुद्रापणकार्यं प्रेषयामास। सेनापतिरपि तस्य मुद्रणकार्याय मूल्यम् भूरि न्यूनीकृतवान्। एवं तयोः मैत्री सञ्जाता आनुक्रमिकेण यातायातसंयोगेन च वृद्धिङ्गता ॥

सायम् पञ्चवादनसमये मुद्रणालयस्य द्वाराणि संवृत्य सेनापतिः चक्रपाणेः गृहमागत्य मिथः आलापानुलापेन कतिचिद् होराः प्रतिदिनमयापयत्। चक्रपाणिः पञ्चविंशतिवर्षः सेनापतेः समवयस्कः एवासीत्। उभौ मिथो मिलित्वा व्यवसताम्। त्रिचुचित्रपटम् द्रष्टुम् उभौ प्रास्थाताम्। मार्गे बुभुक्षा निवारणाय विश्रांतिसदनम् एकम् प्राविशताम्। किंचिद् आश्नीताम्। ततो रङ्गशालानुताम्। ततो निवृत्तौ चक्रपाणिगेहमागत्य सेनापतिश्चक्रपाणिश्च निद्राविधेयौ अस्वपिताम्। स्वप्ननिवृत्तलौल्यौ च समुदितेऽहनि स्व स्व कार्यं आरब्धवन्तौ। एवम् आलापकलापम् वदन्तौ कालम् अयापयताम्। चक्रपाणिः सेनापतौ सञ्जातप्रत्ययो जातः; सहजप्रेमनिष्पन्ननिर्भरश्च तस्य हृदयम् अजनि सेनापतिं प्रति। यदा २ तौ अमिलताम् समाभाषणतत्परौ भूत्वा कालमनयताम्। सेनापतिस्तस्य वल्लभमित्रः ॥

दँडपाणिस्तु पितुः सेवाहेवाकिना मनसा तमसेवत
एकदा सेनापतिः रहो विस्रम्भमुपजनयन् चक्र
पाणिना सह समवदत्। स च तमब्रवीत् 'अस्ति इतः
पञ्चाशद्योजनमिते दूरे धर्मपुरे एकः पुस्तकप्रकाशकः
अहम् भवतः सम्बँधं तेन सह स्थापयिष्यामि येन स
भवतः पुस्तकानि स्व व्ययेन प्रकाश्य लाभार्धं दास्यति'
गंतव्यमेव तत्र प्रत्यब्रवीत् चक्रपाणिः।
गतिं प्रति मुञ्चतु विलम्बम्। शीघ्रम् प्रास्थास्यावः
इति सेनापतिराह।
गाढ़ायां यामिन्याः अनल्पे तिमिरे श्वोभूते शय्यो-
त्थायँ तौ धर्मपुरं प्रति प्रास्थाताम् तत्र च प्राप्य एक-
स्मिन् सँशोधिते पथिकाश्रमे एकस्मिन् कोष्ठे
निवासमकुर्वताम्। तस्मिन् कोष्ठे स्व शय्यां मँजूषाञ्च
धृत्वा चक्रपाणिः एकम् पुस्तकालयमगच्छत् विश्व-
कोषपठनाय। तत्र असँनिहिते तस्मिन्, कोष्टस्य
एकस्याः भित्त्याः उपरिभागे द्वे इष्टिके तत्रैव
विहाय पश्चाद् द्वे इष्टिके सेनापतिना अपनीते तत्र
च आग्नेयचूर्णं तेन निहितम्। अन्यस्याम् भित्त्यां एकः
कीलकः स्व स्थानात् चलित आसीत्। सेनापतिस्तम्
कीलकम् सँगृह्य उत्पाट्य तस्यां भित्तौ यत्र आग्नेय
चूर्णम् निहितमासीत् निचखान आग्नेयचूर्णस्थानाद्
अधःभागे। एकां रज्जुम् तेन नागदँते न बबँध।
रज्जुश्च नागदँतावलंबिना अतिष्ठत्। वैरसाधनम् च
चिंतयन् चक्रपाणिम् प्रत्यैक्षत। चक्रपाणिरपि परा-
वर्तत। मञ्चे उपविश्य उभौ गोष्ठं सुखमन्वभूताम्।
सिगरेटपानस्य उत्कलिकाश्चान्वभवच्चक्रपाणिः।
तदा सेनापतिः रज्जोः अधस्तनम् अंतं दीपशलाकया

प्रज्वालयामास। यदा आवां सिगरेटँ प्रज्वालयितुम् अभिलषिष्यावः अनया रज्ज्वा प्रज्वालयिष्यावः। इति चाकथयत्। रज्ज्वाः अधः एव मञ्च आसीत्। यदा चक्रपाणिः स्व सिगरेटम् प्राज्वालयत् तदा सेनापतिः 'इदानीं नास्ति अनया रज्ज्वा प्रयोजनम्। अस्याः ज्वलितङ्गारं मञ्चे पतिष्यतीति उक्त्वा ताम् रज्जुम् उपरि चिक्षेप यत्रासीद् आग्नेयचूर्णः स्वगञ्च बहिर्गतुमुदयुँक मूत्रोत्सर्गमिषेण ॥

ततश्च एतज्जातम् यद् रज्ज्वा उपरि कोष्ठछदिषि भ्रराणामेकः पटलम् लग्नमासीत्। तेषां स्वभाव एव क्रूरः। यदा कोऽपि तान् स्पृशेत्तदानीम् सँदंशनाय अभिधावँति। ज्वलिता रज्जुः भ्रमरपटलमस्पृशत् भ्रमराश्च अदँशन् तञ्च व्याकुलीकृत्य व्यद्रावयन्। चक्रपाणिरपि 'किमिति? किं सञ्जातम्?' इति कृत्वा तमन्वधावत। पश्चाद् आग्नेयचूर्णविस्फोटश्चाजायत। कोष्ठस्य छदिः शीर्णा भूत्वा कोष्ठांते न्यपतत् ॥

कथमयँ विस्फोटशब्दोऽश्रूयत? इत्यन्वयुँक्त चक्रपाणिः सेनापतिम्।

छदिरियँ न सुनिर्मिता। तस्याः पतत्याः कड़कड़ाशब्दोऽयम्।' इत्यवोचद् उच्छूनमुखः सेनापतिः भिन्नस्वमुखवर्णः॥

एवँ सेनापतेः जीवितँ चक्रपाणिं कोष्ठांते निखातुम् उद्योगो नैष्फल्यङ्गतः। सम्पन्नमपि तत्कार्यं विपन्नम्। यः परान् मीनाति स स्वयँ किं न मीयते। इति उच्छूनमुखहस्तः सोऽचिंतयत् ॥

स्फोटशब्दश्रवणेन महान् कोलाहलव्यतिकरः सञ्जातः। उपारूढकुतूहलाः शतशः पुरुषाः सचकित

नयनाः स्व कुतूहलमपनेतुम् अनिमेषपक्ष्मणा चक्षुषा तँ पतितमगारमपश्यन्। प्रत्यक्षितसर्ववृत्तांता अपि न तेऽजानन् गृहपतनकारणम्। किमत्र कारणताम् इयर्ति इति न कोऽपि व्यजानात् ॥

सेनापतिश्चक्रपाणिश्च स्व २ गृहम् प्रति न्यवर्तेताम् विदूरस्थालोके बद्धदृष्टिः स सेनापतिः आरामे एकान्ते स्थितः किमपि सङ्कल्पयितुमास्त। कुण्ठीभूता मे मतिः अस्मिन् विषये। अहम् नावलोकयम् तद्भ्रमरपटलम् प्रागेव। अन्यथा अयँ दुरुदर्को न अभविष्यत्, समुत्पतिततेजाः स किमपि मँत्रयाञ्चक्रे स्व मनसि व्याक्षेपो नेदमर्हति कृत्यमिति कालसङ्गः परेङ्गार्थः। इत्थम् स निरचिनोत्। किमपि दारुणो विचारस्तस्य चेतसि समुदितः येन सधड्धड्कम्पमानहृदयो भयोद्रेकपिञ्जलः पुटीकृताङ्गः स उद्यानाद् गृहम् प्रति निर्ययौ ॥

शयने निक्षिप्तदेहयष्टिः गुरुजागरोपरि निद्राम् अलभत सः। अपरस्मिन् दिने चक्रपाणिना सह उपविष्टस्य तस्य मुखात् सपरिहासा मधुरमधुरा नर्मप्रियाः प्रसस्रुरालापाः।

निम्लोचति घर्मदीधितौ सेनापतिश्चक्रपाणिः जलविहाराय जग्मतुः। नद्याः तारणाय तरणिमेकाम् आरोहताम्। नौकामारुह्य सेनापतिः कर्णधारोऽभवत्। पार्श्वे च चक्रपाणिः विष्टरे उपविष्ट आसीत् शरीरञ्चालयन् शिरो घूर्णयन् महतायासेनैव स तरिं जलेऽनयत्। अम्भःकणाः परितो उद्डीयँत। नौलुलितमम्भः नौकायाः अपासरत्। अम्भःपृषताः इतस्ततो उपरि उद्डयँत। तस्य कूर्परः चक्रपाणेः

शरीरे लग्नः। चक्रपाणिश्च अज्ञातपातः सलिले ममज्ज प्रवाहे पतितश्चक्रपाणिः तरितुम् नाजानात्। स साहाय्याय शब्दापयामास। परंतु कालग्रहकर्त्ता सेनापतिः सशब्दं नौदण्डेन जलमास्फालयन् तस्य साहाय्ययाचनां न मनसि चकार। दैवेन चक्रपाणेर्वस्त्रम् नौकाया बहि एकस्मिन् कीलके संसक्तोऽभवत्। अतो न स बुब्रोड। स च नौकया जले उह्यमानोऽगच्छत्। चक्रपाणेः जले हस्तपादोत्क्षेपेण नौः विमज्जेत्। नौः व्यसनेनाहँ दुःखीभवेयमित्यपि सेनापतिः नागणयम् रंभ्रमनिवृत्य प्रहारी सरभसम् नौकां तीरं निनाय॥

चक्रपाणेश्शरीरं परिक्षतमभूत्। पङ्कपूरमासाद्य स्खलितचरणः चक्रपाणिः उत्थाय तम् इदमपृच्छत् कथँ त्वँ मम साहाय्ययाचनं तिरस्कृत्य नौकाम् नीतवान्? किमेवम् शत्रुत्वम् त्वया मयीति॥

नाहँ तव शब्दमश्रृणवम्। अहङ्किञ्चिद् उच्चश्रवाः। त्वञ्च जले न्यमज्जः। तवाङ्गद्वयश्च जलास्फालनशब्दे न्यमज्जत्। अहञ्च नौनश्चालनकार्ये न्यमज्जम्। आसीत् स मुहूर्त्तो निमज्जनस्यैव। इति स प्रत्युवाच वीचिमालापरिसरे स्वस्थशरीरो स्थितः॥

तेन विक्षतविग्रहस्य चक्रपाणेः बाहू निर्जीवाङ्गमिव आलम्बेतां निःसत्त्वौ। मुखाद् मूर्धनश्चासृक् प्रावहत्। नदीजले स्ववस्त्रो निस्नातः शीतेन अवस्तब्धः गात्रस्तम्भँ प्राप्तः गलिताङ्गैश्च स व्रणानि विक्रियेरन् इति भयाद् आतुरालयञ्जगाम। चिकित्सकश्च व्रणशोधनँ कृत्वा व्रणानि विलिप्य पट्टिकावेष्टनमकरोत्। यावन्न व्रणानि विरोपितानि तावत् स चक्रपाणिः महतीमार्तिमाछेत्। यावत्स अनुपक्रान्तः आसीत्तावत्

स आतुरालयेऽतिष्ठत्। शनैः २ बलम् प्रत्यापद्यत। प्रकृतिस्थशरीरता च जाता। सुतराँ सुस्थशरीरोऽसौ-ऽयमन्नालयाद् आयात्॥

वैरप्रतियातनेऽसफलीभूतः सेनापतिः निश्चयम् नाहारयत। अभीप्सितार्थ स्थिरनिश्चयः स मनोहतो न बभूव। बद्धाशः स महान्तँ यत्नमातिष्ठच्चक्रपाणेः सत्त्व-प्लवाय आत्मानम् संशितव्रतश्च कर्तुम्। सोऽभ्य-ज्ञानाद् दण्डपाणिना सह भोजनपानक्रियाः तस्य प्रार्थनाश्च स्वीकरिष्यामि। असकृद् विपन्नकार्यस्य-अनुरागँ तस्य मनसोऽपराजयमव्यश्नयत्॥

यदा चक्रपाणिः चिकित्सालयाद् गृहमागच्छत् तदारभ्य तयोः मिथः साक्षात्कारोऽभूद् भूयोभूयः। एकदा स एकाकी गृहे स्थितः प्रातरेव शाणयँत्रेण एकां असिधेनुकां तेजयितुम् समुद्यतोऽभवत्। परंतु क्षणँ विरम्य दीर्घं निश्वस्य स विचारमेतमत्यजत्। साधवो हि प्रतिज्ञामपवर्जयन्ति इति कृत्वा स कालाः तिपातासहोऽयम् कृत्यः इति च विचार्य किमपि ऊहापोहे पतितोऽभवत्। एतादृशङ्कार्यं समाहृत्य दुःखमापद्यते इति विभाव्य स मुखमालिन्दँ न भेजे। तस्यातु किंचिद्विचिन्त्य विषादविमुक्तँ मुखमाबभासे। कदाहङ्कार्यमेतत् संपाद्य उल्लसितो भविष्यामि शुभँ-युना दण्डपाणिना सह सङ्गतो भविष्यामीति व्य-चिन्तयत। विचारितस्य उद्योगस्य भाविसाफल्याशय मोऽत्यन्तशुभोऽभवत्। स्वतीक्ष्णधिषणायां निर्दे-स विजयाशँसाम्। व्यवसायमाश्रिता सम्पत्। मैत्रीम् ऋमतां सोऽलमजानात्। विवृताननस्य तस्य मुखराग दीप्तोऽभवत् कयापि आशया। यथा चिंतितँ तथ

विधीयतामित्यात्मने उक्त्वा प्रमना बभूव सः । एवं हि तस्य हृदये वृद्धिङ्गता आशा यत् स्व स्थानात् प्राचलत् सः । एतस्य कार्यस्य निर्वहणे स आग्रहम् जग्राह ॥ स्व स्थैर्यञ्च दृढ़ताणि प्रदर्शयितुं निश्चिकाय । यथा समूलोऽन्न परिशुष्यति चक्रपाणिः एवं गर्वम् विगह्य क्षान्तिं करिष्ये इति मनसि अकृन । स्वस्य प्रक्रमणस्य युक्तरूपताम् स नाऽलं वेद । चक्रपाणिः पराक्रमभवदित्येद् वृत्तान्तं यदाऽहं दण्डपाणिरूपायनी करिष्यामि तदा स कथं माम् आशीर्भिरभिवृष्य आलिङ्गियतीत्याशा तमतिहर्षितञ्चकार ॥

दिनेषु एतेषु सेनापतिश्चक्रपाणेः गृहे एव जलपानङ्करोति स्म । उभौ अवैरस्येन कालं निन्यतुः । सेनापतिना करण्डके एको द्विजिह्व आनीतः । तस्मिन् समये एक आहितुण्डिकः चक्रपाणेः गृहस्य सम्मुखे पथि कलनिह्लादिनीम् वीणाम् वादयन् विवर्तनानुवर्तनैः गतिविशेषैश्च एकं सर्पं विमोहयन् तेन सह चिक्रीड । कलमधुरगानेन व्यालाः सुखेन वशम् आयन्ति । काकोदरा आहितुण्डिकस्य वीणामधुरवं विस्मृतात्मानो जायन्ते । तस्मिन् एव समये सेनापतिः अपि च सर्पं करण्डान्निसार्य चक्रपाणिमदर्शयत् । काले तस्मिन् ऐन्द्रजालिकस्याकोविदस्य मन्द्रतारः श्रोतहरो निनादो व्यालस्यापि श्रवणयोरानिश्यमायाति स्म सोऽपि व्यामुग्धावस्थायामासीद् न स सेनापतिम् अदशत् ॥

नायम् सर्पः कमपि दशति । अस्य विषदंष्ट्रः मया उत्पाटितः इति स चक्रपाणिम् समगिरत । सर्पञ्च करण्डे न्यधात्तत्रैव भित्तौ उपरि कोणे तम्

त्यथाख्य॥

श्वोभूते पुनरायातः सेनापतिस्तस्य चक्रपाणेः गृहम् । जलपानसंभारश्च समारब्धः । चक्रपाणिस्तदा मञ्चे स्थितः सौचिककर्म कुर्वन्नास्त । सेनापतिस्तस्य सूक्ष्मसीवनं निपुणं न्यरूपयद् अहो नैपुण्यम् शिल्पस्य भवतः इति च व्याहरत्। चक्रपाणिः सूचिं पुनरादाय द्विगुणितवेगेन वस्त्रसंधौ सूचिं प्रवर्तयितुमुपाक्रमत । यदा स एवं सूचिकर्मणि व्यापृत आसीत्तदा सेनापतिः शृतक्षीरं व्यालस्य पानाय चषके आपूर्य चक्रपाणिम् जगाद 'आनय तं दर्वीकरं तस्मात्करंडकाद्' इति। चक्रपाणिः सूचिशिल्पाधारं पार्श्वे निधाय सर्पमानेतुम् भित्तिसमीपङ्गतः। करण्डकमुद्घाट्य सर्पमादातुम् प्रसारिते दक्षिणहस्ते करंडकान् मुखं निःसार्य काल-रूपः सर्पः तस्य चक्रपाणेः कनिष्ठिकोपरि उत्कटम् क्ष्वेलमवमत् परंतु सूचिकर्मणि व्यापृतस्य चक्रपाणेः कनिष्ठिका अङ्गुलित्राणेन परिरक्षितासीत्तदा। न तद् विषम् अविशत्तस्य शरीरस्य रक्तप्रवाहे ॥

कालभोगिना अहम् अदंशि । पश्य कीदृशम् लग्नं गरलम् स उदवमद् इति चाक्रंद्य सेनापतिम् तद् अदर्शयत् ॥

सर्पस्य विषप्रतिविधाने किमपि स्खलितमभजन् मे प्रयत्न इति प्रत्युवाच सेनापतिः ॥

सेनापतिश्चक्रपाणिं परलोकांतरितङ्कर्तुं व्यवस्थित मतिरासीत् । चक्रपाणेर्मनसि न किमपि शङ्का अंकुरिता अभवत्। न स सेनापतौ अनाश्वासङ्गतः। इत्थम् तस्य मतिविभ्रमोऽजायत। आकुञ्चितमतिः स तस्य भ्रमजाले तथा पतितो यथा कृतेऽपि अपराधे

स रोषं विमुच्य तं प्रति प्रीतिपुरःसरं व्यवहारमतनोत्
सेनापतेः सर्वम् असच्चेष्टितम् तस्य हर्षत्रयीभूतमाप
न तस्मिन् किमपि अविश्वासम् सेनापतिविषये
ऽजनयद् नापि चक्रपाणिः उन्मना अभवत्। तेन सह
विरचितसौहृदः सेनापतिः नुतमित्रः तम् पुरतः
प्रासीदत् पश्चाच्च शंकुलावत् तम् कर्तितुम् यतन्
व्यधात्। चक्रपाणिरपि तस्मिन् प्रासीदत्। सेनापतेः
तु एकैव चिंता आसीद् यथा दारिद्र्यमपेयाद् अपहन-
दारिद्र्यो यथा चाहम् श्रिया समालिङ्गितो भवेयम्
तथा विधेयम्। धनमेव प्रसाधयितुम् स यत्नवान्
आसीत्। धनापेक्षया दुःखमनुभवितुं न सोऽवाञ्छत्
धनप्राप्त्या स्व मनोरथमापूरयितुम् तस्य उत्साहो न
ह्रस्वीभूतः। कथमहम् इदङ्कार्यं साधयेयम् इत्येतन्
विषये तस्य स्वांतम् विचिकित्साभिराक्रान्तम्। कार्यं
इदम् नैषत्करमासीत्। कार्ये असफलतया दण्डपाणिं
प्रति गमनम् तस्य बालिश्यमेव प्रमाणयेत्। नूनः
पिण्डबुद्धेः चक्रपाणेः जीवितमपहर्तुं कृताः त्रय-
प्रयत्नाः निष्फलताम् भेजुः। स भ्रांतमस्तकोऽभवत्।
यद्यपि चक्रपाणिना स त्रिवारं संशयारोपाद् मुक्तः
तथापि कार्यसाधने विफलीभूतः किमपि उपचितम्
दैवेन इति कारणात्। परिच्छेदनिष्ठुरो न स क्षणम्
लेभे। स ताम्बूलकरङ्कमादाय एकां वीटिकां करे
समर्प्य प्रसादम् गपन्नि आत्मदर्शी स्व मुखम् दृष्ट्वा
तथा यतितुमारभत यथा सिद्धमाप्नुयात्॥

मध्याह्ने सेनापतिश्चक्रपाणेः गृहमगात्। चक्र-
पाणिः सुकविः पद्यगुम्फनम् अभ्यस्यतामीत। स
काव्यम् विरचयितुम लेखनीमादाय आरब्धः।

एकां पँक्तिमलिखत् –

अद्यश्स्तमिते लोकाद् न कोऽपि दोषाकरः।

सेनापतिश्चादेशयत्।

त्वम् तु काव्यरत्न विरुद्भाक् भवितुमर्हसि । तव काव्यम् प्रौढ़ं सारल्यञ्च न जहाति। तव काव्यँ दृष्ट्वा अहम् नितान्तमंतःसंतोषमनुभवामि। त्वयि कविराज-पदमुपन्यस्तम् भविष्यति राजाज्ञया कस्मिंश्चिद्दिने। अधुना प्राप्ता भोजनवेला। कामो मे भुञ्जीथाः त्वम् मद् गेहे। अतो भोजनाय गमिष्यावः। इति कथयित्वा सेनापतिस्तम् स्व गृहमनयत्। तत्र च तस्य भोजने विषँ संमिश्र्य तमाशयत्। स्वयँ तु रुचिकरभोजना-शनसमये भूरि अवपच्चाण।

स्वगृहँ परावर्त्य चक्रपाणिः असुनिष्क्रमणाद् गतः!

वृत्तांतँ इममुपलभ्य सेनापतिः दण्डपाणिम् तँत्री-संदेशम् प्राहिणोत् 'परिमार्षवि' इति।

रक्षिगृहङ्गत्वा अतिक्रान्तँ वृत्तान्तँ रक्षिणाम् पर्यवेक्षकाय आवेदयत्।

रक्षिणामध्यक्षः इमँ दारुणँ समाचारं निशम्य कोपेन लौहितकः कार्यजातँ संहृत्य रक्षिवर्गान् सह आदाय वृत्तांतसाक्षात्करणाय तस्मै प्रदेशायान्वगत्। समस्तनगरे विद्युत्संदेशान् प्राहिणोत् स्थाने २ सायुधः प्रहरिणश्चाजागरुः। अपराधी आत्मानङ्गोपायित्वा न निष्क्रामेत्। कालक्षपयितुम् न युक्तयुक्तम् अमन्यत। निविष्टचेतसा च वेद्यवेदनोन्मुखोऽभवत्। अपसर्पाश्चापि तेन न्ययुज्यँत। उन्नतप्रपदमचलत् प्राप्तोच्च चक्रपाणेः गृहम्। चक्रपाणेः शवँ मरणोत्तर-देहपरीक्षाफलमाख्यातुम् मृत्युमीमांसकाय प्रेषया-

मास। स तु इत्थमलिखत् 'बाह्यबलात्कारस्य चिह्नम् नास्ति। उग्रस्य गरलस्य लक्षणम् संलक्ष्यते' इति।

वैद्यस्य इमां व्याक्रियां उपलभ्य स नियुक्तचेतसा मृत्योः कारणोपलम्भाय मतिङ्कार्यं व्यधत्त। कियतां परितो विचयनम् येन पातकपिशुनानि अवस्था-विशेषाणि लभ्येरन् कस्मिंश्चिद् इति घुषिता तेन आज्ञप्तिः रक्षापुरुषेभ्यः। कतिपयैः जनैः सह कर्णाजापमकरोत्। इदं श्रीयते लोकैं इति स तेषाङ्कर्णे ऽजपत्। यतः सेनापतिरेव चक्रपाणिमरणवृत्तान्तम् आवेदयामास अतस्तमाकारयद् रक्षाध्यक्षः॥

अयमहमागतः इत्युक्त्वा सेनापतिः त्वरितपदेन आगच्छत्।

सर्वो माँ तुलयिष्यतीति स मनसि व्यभावयत्।

प्रश्नपरम्परा नगरपालस्य जिह्वाग्रे तस्थौ।

विस्मयाविष्टा लोका अप्रतिपत्तिमूढास्तत्र न्यमेनाः।

स्वकर्मसंत्रासितपुरुषवत् शङ्कितदृष्टिः सेनापतिः इदँ रहस्यँ कृच्छ्रगोप्यम् न्यभालयत्। रुद्धकण्ठः कथँ कथमपि वक्तुङ्क्षमः स चक्रपाणिना स्व हस्तेन लिख्तानि अक्षराणि नगरपालमदर्शयत् –

'मय्यस्तमिते लोकाद् न कोऽपि दोषाकरः।'

अर्थतः इदमापद्यते यदाहँ मृतः स्याँ अस्माल्लोकाच्च गतो भवेयँ तदा कोऽपि अन्यः पुरुषो दोषाणामाकरो न मन्येत। अन्यँ कमपि दूषयन् पुरुषः प्रक्षुब्धमतिरेव भवेत्। तेन चक्रपाणिना आत्महत्या कृता। अत एव स स्वयमलिखद् 'न मे मृतौ कोऽपि प्रतिवाच्यः' इति

तत्रस्थम् वातावरणम् भयानकालोकम भेजे वृत्तमिदम् जगतो विस्मापनमासीत्। तत्रस्थो लोकः

स्तँभितो लिखित उत्कीर्णित इव तस्थौ। साकूतम् ते ऽन्योऽन्यम् व्यलोकयन्। समेतस्य जनस्य विस्मयोद्गारैः पर्यपूर्यत तत्स्थानम्। चक्रपाणिमुद्दिश्य अवाच्याः कथा लोकाः प्रासारयन्॥

'तस्य मृत्योः कारणं कस्मिन्नपि आरोपयितुम् न शक्यम्। न कोऽपि दण्डनीयतामेति अस्मिन् विषये।' पुनरब्रवीत् सेनापतिश्चक्रपाणेः मृत्युना बाष्पँ सृजन्।

प्रचकितां जनाः तस्य वचसि अवधानमददुः।

किमर्थम् स चक्रपाणिः आत्मघातमकरोत्? किं नासीत्तस्य सन्निधे पर्याप्ता धनमात्रा यया जीवन निर्वाहन कुर्यात्? कोऽपि अभिपङ्गो विषादो वा संवृत्तः? किं स रोगोपसृष्टतनुर्दुर्बलतितमुमुक्षुरासीत् को रोगो रुजन्ते स्म तम्? इति पृष्टः सेनापतिरुवाच—

स लेखनकार्येण पर्याप्तँ धनँ नार्जयितुक्षम आसीत् एकदा मया सह धर्मपुरङ्गतः प्रकाशकेन मिलितुम्। तत्रापि निष्फलीभूतोऽस्य प्रयत्नः।'

कस्तस्य पिता? इति अपृच्छज्जनेषु एकः।

पिता तस्य गुणरत्नः पिनाकपाणिनामा महाधनिकः शिल्पयंत्रस्वामी स्वकनीयसा पुत्रेण दण्डपाणिना सह निवसति। न कोऽपि अस्य पुत्रो भार्या वा यस्यार्थे स विषादङ्गतः स्याद् इति कोऽपि समेतेषु जनेषु प्रत्यवादीत्॥

अस्य मृत्योः हेतुरुन्नेतुम् दुष्करः। अस्मिन् अनुसंधाने कानिचिद् दिनानि लगिष्यँति। अस्मिन् विषये किमपि प्रत्यक्षमनुभवँ प्रमाणम् नोपलभामहे केनापि गुरुणा कारणेन भवितव्यमस्य मृत्यौ। दुर्जनाः सँवदयाः, नृहत्यायाः परतरं पातकँ नास्तीति

अभयधान्नगरपाल: ॥

न तस्य घातको दृष्टिपथमवतरति। कुत्र सोऽन्तर्विलायन् विलीन: ? सर्वतश्च अन्विष्यताम् दस्यु:। कतमेन दिग्विभागेन गत: स जाल्म: येनायम् व्यापादित: इति स रक्षापुरुषान् आदिदेश ॥

परिस्थितिरियम् भयङ्करा। नगरपालो मह्यम् न श्रद्दधाति। स मे वचो न श्रद्दधाति ।मित्रेण गोप्तः पर्यायैश्चक्रपाणि: हत: इति रहस्यं चिरं गोपायितुम् न शक्यते। रहस्यमिदम् आशीर्ष: उत्भेत्स्यत एव। तं मामेव संधेदंतीति विभावयन् सेनापति: स्तंभित गात्रोऽभवत् ॥

उदन्तोऽयम प्रथत सर्वत्र नगरे। यस्य २ कर्णपथेऽयम् दारुण: उदन्तो न्यपतत् स चक्रपाणिविषये आदितस्तस्य सर्वश्रीवनवृत्तानि कथयामास। चक्रपाणे: सारस्य गारङ्गमा: कृतयो यस्य २ परिचिता: आसन् स बाष्पादिकोद्गारमकार्षीत्। कोऽपि तस्य वैरी स्याद् य: एवम् व्यचेष्टत येन वैरप्रतिमोक्षनाय अयम् विषम् पायित: स्यात्। अगदङ्कार: परीक्षणे निवृत्ते इदम् तु स्पष्टमेव यद् स विषं पायित: स्वयम् वा पीतवान्। संदेहो मे मानसमाक्रामति। कृच्छ्रसाध्यं इदङ्कर्म। अस्तु तावद् गते कियति काले सर्वम् स्पष्टं भविष्यतीति निजगाद रक्षिणां पर्यवेक्षकोऽगाच्छच्च रक्षिगृहम् ॥

नत किंचित् स्थित्वा आत्ययिकानि कार्यान्तराणि विहाय स नगरस्य भिषजांश्च द्रष्टुमगात्। कयापि रुजा असौ अपीड्यत चक्रपाणि: यया तस्य प्रकृतिप्रत्यापत्ति: प्रत्यरुध्यत। व्याधिना विशीर्णसर्वावयव:

स्याद् इत्यतर्कयत् सः ॥

स दैवज्ञान् स्वमुखात्संपद् अपृच्छच्च तान् ।

न कदापि सोऽत्रागतः । न कापि रुक् तमबाधत । इत्येव उत्तरं स प्राप्नोत् सर्वत्र ॥

लेखकाः परस्परमसूयवः सन्ति । न कोऽपि लेखको अन्यस्मिन् लेखके मैत्रीं भजते । केनापि अन्येन लेखकेन अयम् हतः स्यात् । लेखका मार्गयितव्याः । तेषां विषये विचारः कर्तव्यः । अस्त्यत्र एको ज्ञाननिधिः लेखको यो भृशम् तमकुत्सयत् । तदा स ज्ञान निधिमन्वगयत । परंतु ज्ञाननिधिः नगरे एव नासीत् । स्वनामधेयविन्य सपूर्वकं पत्राणि कुटुम्बाय प्रैषयत् ।

यावदेव अहम् अत्रागाम् तावदेव वृत्तमिदम अनुसमधाम् । परंतु वृत्तस्यास्य संवृत्तस्य पञ्च दिनानि व्यतीतानि न मया किमपि प्राप्तम् । घातको ऽतिक्रान्तो लोचनगोचरम् इति चिन्तयित्वा नगरपालेन संदेहे न्यलीयत ॥

चारमुखेन इयं प्रवृत्तिस्तेनाधिगता यच्चक्रपाणिः मरणात् पूर्वम् सेनापतेः गृहङ्गतस्ततः परावर्त्य मृतः अतः । अतः स सेनापतौ एव उपजातशङ्को भूतः । किंतु सेनापतौ दंडम प्रवर्तयितुम् किमपि प्रमाणम् अपेक्ष्यते । अतिकृच्छ्रमापतितम् । नेदम् रहस्यं कस्यचित् संश्रवणे उद्घाहार्यम् । अन्यथा प्रमाणम् न लभ्येत । एकस्मै स्पशाय क्षणमकरोद् रक्षिगृहे । यदा स आगतस्तदा तं पत्रविद्युत्संदेशप्रेषणविभागकार्याध्यक्षाय प्रेषितवान् कोऽपि तत्र पत्रतन्त्रीसंदेशो वा स्यात् सेनापतिना प्रेषितस्तस्मै वा केनचित् प्रेषितः तदवगम्यताम् । मंत्रभेदो मा भूः मन्त्रो न भिद्यात् ।

सुगुप्तमंत्रसाध्यानि कार्याणि भवन्ति। सम्यक् मंत्रं अनाख्येयम्। न कस्यापि श्रोत्रे सनाथीकर्तव्ये मंत्रिणा भयात् अवर्जनुखेन भवितव्यमिति तं उपादिशत् ॥

पुरा उपातेष्ठति प्रमाणम् इत्याशया प्रणिधिः निरयात्। तत्र च एकः तंत्री सन्देश आनीतो यो सेनापतिना दण्डनायके प्रहित आसीत्। तत्र च इमानि अक्षराणि लिखितानि आसन् 'तरिमाषवि' ॥

किमेतत् सङ्केतयतीति न जानामीत्यह नगरपालः। स सपरिश्रमम् सेनापतिमाकार्याप्राक्षीत् 'कोऽर्थोऽस्य सन्देशस्य।'

सेनापतिरब्रवीत् 'तरि इति नौका। माष इति सुविज्ञयनेऽन्नविशेषः। वि इति पक्षिपर्याय.। अर्थस्तु यथभेद। जलसेना पदातिसेना वायुसेना आसाम् तिसृणां प्रस्थानं भविता। युद्धं भविष्यति द्वयोः देशयोर्मध्ये इति रहस्यभेदो मया कृतः स्व मित्राय ॥

श्वोऽहम् इतो गन्तास्मि परश्वश्च परावर्तितास्म। ततोऽहम् तंत्री संदेशम् प्रहेष्यामि। तदा यूयम् त्रयः पुरुषास्तत्रागच्छथ। इति रक्षिभ्यः कथयित्वा स बद्रीगढम् प्रति प्रास्थित ॥

बद्रीगढम् प्राप्य स दण्डनायकमित्राय अपृच्छत्–अयं सन्देशो भवते प्रेषितः सेनापतिना। किमर्थम्?

स प्रत्यब्रवीत् 'तरिमाषवि। तरि अर्थः नौका। माष खाद्यपदार्थः। वि इति अश्वपदार्थः। सेनापतिः इतः आगन्तुः। मार्गे तस्का नदी स्थलपथश्चास्ति। स मां नदीतरणाय स्थलमार्गलङ्घनाय खादनाय च मार्गव्ययार्थम् प्रार्थयेत ॥

अस्योत्तरः सेनापतेरुत्तरेण व्यभिचरति। सूतार्थः

किमपि अन्य एव भवेद् इति स नगरपालः उहितवान्। स कोपकटाक्षम् इतस्ततो न्यक्षिपत्।

नगरे भ्रमित्वा जिज्ञासमानोऽसौ किंवदंतीम् इयं अश्रौषीद् यद् अस्य दण्डपाणेः एको भ्राता आसीत्। स तु मृतः। तस्य अवसानात् पश्चात्तस्य पिता एकम् दानलेख्यमकारि येन सर्वम् पैत्र्यमृक्थम् दंडपाणये समर्पितम्॥

कथम् अस्य पित्रा ज्ञातं यच्चक्रपाणिः मृतः इति जिज्ञासा तस्य हृदि आविरासीत्।

उपगम्यैव च दंडपाणिम् स्व पितुः दानलेख्यम् दर्शयितुम् प्रार्थयत। दानलेख्ये इदम् लिखितं आसीत्—

ममैक एव पुत्रः तस्मै अहं सर्वमृक्थम् समर्पयामि।

'कथं भवता ज्ञातं यच्चक्रपाणिः मृतः?' दण्डपाणिः किमपि विमर्शच्छेदिप्रत्युत्तरं दातुम् नाशक्नोत्। तस्य पितरमपृच्छत्। स परिमितवाग् अब्रवीद् मह्यम् अनेनैव कथितमिति। अहं तस्य सत्यत्वपरीक्षायै चक्रपाणये एकम् लेखम् प्राहिणवम्। प्रतिलेखम् न प्राप्नवम्। मया प्रेषितो लेखः सावरणो मह्यम् प्रत्यर्पितो यत्र आवरणे लेखाहारकेन लिखितमासीत् 'चक्रपाणिः मृतः'। तदाहम् दानलेख्यमकार्षम्॥

नगरपालस्तम् निसृज्य गतः। चक्रपाणेः मृत्यु सन्देशोऽस्मिन् तत्रैसन्देशे एव निहितः इति स ऊहां चक्रे। क्रोधेन अलोहितायत तस्य वदनम्॥

गुरुचिन्तनभारम् असहमानो स पथि एकस्मिन् उद्याने श्रमम् अलभत। प्रेक्षावद्भिः कार्यं सत्यगवेष्टव्यम्। फलम् पुनः विधातरि आयत्तते। सेनापतिना एव चक्रपाणिः व्यापादितः इत्यत्र नास्ति संशीतिः।

परंतु प्रमाणम् मार्गणीयम्। प्रमाणम् विना न कोऽपि दण्डभाग् भवति॥

केदारपुरम् यथागतम् न्यवर्तत। रक्षिगृहङ्गत्वा रक्षिभ्यो यथास्थितम् उदन्तम् प्रकटयामास॥

निर्भिन्नप्रायम् रहस्यम्। कस्येदम् आगः इति च निरूपितम् मया इत्युक्त्वा आहारादिसकलव्यापारम् परिहृत्य क्षिप्रम् उत्थाय द्वारपक्षेण ताड़ितः स निरयात् सेनापतिगृहञ्च प्राप। त्रासकृद्भिः वचोभिः तम् त्रासयित्वा इमां वेलाँ त्वाम् अन्विष्यामि। क्व निलीयसे? स्वयमेव कृत्वा अन्यम् अपदिशसि। स्वस्तेऽयम् व्यतिक्रमः। अन्यादृशः संवृत्य आत्मानं आच्छादयसि। चक्रपाणिना आत्महत्या कृता इति त्वत्तः श्रुत्वा नाहँ तत्रोमिति अब्रवम्। नाहम् त्वयि अदद्धाम्। नास्मि इदानीम् द्वैधीभूतचेता। किमस्य संदेशस्यार्थः? कथम् त्वया जोषमास्यते? मम अनुसंधानकार्यं इदानीम् परिणतिम् भजते। असकृन्मे मनसि विचारोऽयम् उदगाद् यत् त्वया एव इदम् घोरहत्या कृता स्यात्। भृशँ यत्तम् मया सुविचारितम् च। अधुना स्फुटीभूतम् यन्नासीन्मम इयम् अलीक शङ्का। त्वमेव चक्रपाणेः घातकः इति सम्यगुन्नीतम् मया। किं त्वया मिथ्यावार्त्ताजालम् विरच्यते? कथम् त्वम् सत्यभाषणे ग्लायसि? इदानीम् अहम् हतप्रत्यूहः संवृत्तः। सर्वम्मे स्पष्टीभूतम्। त्वादृशानां कुटिलानाम् व्यवहाराः कुटिलाः। अयम् सन्देशोऽपि कौटिल्येन वाचनीयः। प्रातिलोम्येन अयम् पठनीयः प्रातिलोम्येन पठितोऽयम् सँदेशः वक्ति 'त्रिपमारित' इति॥

तस्य हस्तसँज्ञया आज्ञापिताभ्यां रक्षिभ्यां दुर्मोच-हस्तग्रहेण गृहीतः सेनापतिः निर्वचनः स्थितः।

प्रमोमुद्यमानो नगरपालः सकलँ रहस्यम् प्रस्फोटयन् क्षोभकया गिरा अब्रवीद् इदानीं सकलँ रहस्यँ निर्भिन्नम्। चक्रपाणेः श्लोकस्य प्रथमश्चरणः—

'मय्यस्तामिते लोकाद् न कोऽपि दोषाकरः' इदँ वक्ति बहुलपक्षे यदा तिग्मदीधितिः अस्तमेति तदा चन्द्रो न उदेति। अतः सूर्यस्यायम् आशयः।

यदाहम् अस्तङ्गच्छामि आलोकात्तदा दोषाकरो न दृश्यते।' कवयः प्रकृतिविषयिकां कविताम् प्रायः रचयँत्येव। त्वम् तस्यां पँक्तौ श्लेषात्मकम् द्वितीयम् अर्थमुत्पाद्य अवसरं निभाल्य तँ विषम् पाययित्वा अहन्। वृत्तांतानुमेयप्रमाणँ सर्वं अस्माकँ हस्तगतम्। शिष्टम् कृत्यँ वयम् लघ्वनुष्ठास्यामः। सततँ अहम् अस्मिन् विषये जागरितः आसम्। मम पुरुषकारः फलावहो जातः॥

पश्चान्निगडितबाहुयुगलम् अनेकनैस्त्रिंशिकैः अनुयातँ तँ पुररक्षास्थानम् अनयत् तत्र च रज्जुभिः नियम्य तँ अशृङ्खलयत्॥

त्वम् जीवग्राहँ गृहीतोऽसि मया। इदानीं ते सर्वनाशस्य स्वल्प एव समयोऽवशिष्टः। दुष्कृतः परितो विघ्नः पतँति। आयास्यति स समयः यदा त्वां दण्डपाशवधस्तम्भँ नीत्वा ते चरणयुगलँ निगडयित्वा स्थापयिष्यँति। यूयञ्च मुखँ पिधास्यथ। दृशौ सँवरिष्यथ। हृदयङ्कठिनीकरिष्यथ कारागृहनियुक्तानाम् आज्ञया। उद्बध्य च व्यापादयिष्यँति। प्रभुरपि न अभ्युपपत्स्यते त्वाम्। इत्थम् तँ अधर्षयत्॥

मा बिभीहि। न हि धीरान् विपदः परिभवंति। जायस्व म्रियस्व इत्येवायम् संसरति देही। एवञ्च समाश्वासयत् ॥

एवँ चक्रपाणिः 'मय्यस्तमिते लोकाद् न कोऽपि दोषाकरः' इत्युद्गारैः सह परासुः भूतः।

सेनापतिरपि 'नरिमाषवि' इति सोद्गारो परासुः भूतः यथा केचिन् मनुष्या मरणसमये वमंति। वमनसार्धमेव प्राणांस्त्यजंति ॥

द्विजिह्वस्य गृहे आगमनाद् द्विजिह्वसंसर्गाच्च उभौ एव द्विजिह्वौ जातौ। श्लेषयुक्तां आनुलोम्यप्रातिलोम्य द्व्यर्थकां रचनां चाकुरुतां यथा दीपेन दीपो प्रवर्त्यते ॥

... * ... * .. * ... * ... * ... * ...

# उपमा पांडित्यम्

कश्चित् स्त्रैणः कस्याञ्चित् पुँश्चल्याम भिनिविष्टः उत्सेकविवंक्रहृदयेन सेवापरः स्थितोऽपि जानुभ्यां अवनिङ्गत्वा प्रह्वम् तामभ्यर्थ्यापि तामनुव्रज्यापि तां न्यक् प्रेर्यापि चामीकरवर्णाभ्याः मुखान्निःसृतैः कालरूपैः शब्दैः विप्रलापैश्च स्व प्रणयं विहतं प्रेक्ष्य आत्मनो यथाकामं च अनवसरां समीक्ष्य नयनयुगाद् बाष्पबिन्दुसन्दोहम् विमुञ्चति यथा कार्तस्वरवर्णाग्नेः निःसृतेन कालेन धूमेन पुरुषोऽश्रुबिन्दून् विमुञ्चति ॥

रात्रौ सर्वत्र प्रणयलीला प्रसरति। सर्वे स्त्रीभोगप्रसक्ताः जायन्ते । दीपमालाभिरुद्भासितेषु गृहेषु धनिनः कोणे निवेशितदीपिकाप्रकाशितेषु सद्मसु दरिद्राः वा यथा परस्परं अक्षिनिकोचम् कुर्वंति तथैव आकाशे ताराः अपि ॥

समुद्रफेनोऽर्णवाम्भसां सारः यथा सारः दुग्धस्य नारः। समुद्रफेनः समुद्रजलापेक्षया अधिकमूल्येन विक्रीयते ॥

जलम् चन्द्रबिम्बमङ्के धारयति यथा लोकाः पुत्रम् अंके धारयंति यतः चन्द्रः जलस्य पुत्रः अमृतमंथनकाले तस्माद् उत्पन्नः ॥

प्रावृषि वर्षति अद्धधारे जलधरे मण्डूककदम्बाः विरचितुमारभंते अनवरतमारटंति यथा वयं स्नानसमये मुण्डोपरि जलं मुक्त्वा रामरामेति उच्चारयामः

चन्द्रमा शशलाञ्छनः उच्यते ।यथा शशकः क्रूरकर्मा स्वाअंकानपि अश्नाति तथैव चन्द्रोऽपि क्रूरकर्मा

विरहिणः सँतापयति। अतः स शशम् लाञ्छनच्छलेन बिभर्ति ॥

ॐ

# सुखम् क्षणभंगुरम्

## (नाटकम्)

## प्रथमोऽङ्कः

(एकस्मिन् मङ्गलसंविदाभिरुद्भासिते सद्मनि)

गुणसागरः — किमत्रभवतः इमौ द्वावेव आत्मजौ ? किं तयोः नामधेये ?

सुन्दरेशः — अयम् ज्यायान् भ्राता सोमसुन्दरः। कनीयांस्तु कल्याणसुन्दर इति नाम बिभर्ति !
[वातायने स्थितः बहिरालोके बद्धदृष्टिः। प्रचण्डो झञ्झावातः सहसानपत्य अधश्च घूर्णयन् पथिकानां आननविवराणि उद्धताभी रेणुकाभिः परिपूरयन् नयनयुग्मम् अंधीचकार उच्छ्वासश्च प्रत्यरुणत्।]
बाल्यात् प्रभृति तयोः भरणपोषणौ मदधीनौ। एवम् चिन्ताभिः समाक्रांतचित्तो नाहक्षणम् लभे।

गुणसागरः — नास्ति तयोः माता ?

सुन्दरेशः — अम्बा तु तयोः इतः पञ्चवर्षेभ्यः प्रागेव क्षयरोगेण देवभूयङ्गता।
[एकम् पत्रम् पठित्वा विदार्य च पत्रखंडानि बहिरक्षिपत्]

सोमसुन्दरः — क्व मे पुस्तकम् न्यधाः। लघु इदम् मृग्यताम्।

कल्याणसुन्दरः — नाहम् जाने किमपि पुस्तकविषये।

(पितरञ्च) इमानि मोदकानि बहुतरं स्वदंते मह्यम्। मोदकखादिकायां अस्ति मे अभिलाषः । किंचिद् आणकानि ददातु भवान् मोदकिकादानयामि छ्यान्

सुदर्शनः (चत्वारि आणकानि तस्मै समर्प्य बाहिः द्वारं ... ) [... अभितः ... , जगाद अंधी ... लोकान्] – तयोः जन्म तयोः मातुः अनवधिकमानन्दम् उत्पादयामास । परंतु आशीयः एव सा सफलीकृतभर्तृपिण्डा द्वौ पुत्रौ तस्मै दत्वा दीर्घतीव्र मयग्रस्ता मासजातापत्या दिवङ्गता । अयं कल्याणसुदरस्तु जननीक्रोडसुखमपि मासमेक मन्वभूत्। द्वौ विज्ञदशौ शीलेन । अयम् सोमसुन्दरो ऽध्ययनाय क्रमते कल्याणसुन्दरस्तु नैकक्रीडामँडलेषु विनोदितात्मा खेलनाय क्रमते । एकानूकयोः वैचित्र्यं विद्यते रुचीनाम् । गतायां तस्यां न कोऽपि गृहे व्यवस्थां संविधातुक्षमो मन्नियोगे संस्थितमेकम् भृत्यम् वर्जयित्वा । अयमेव मे संतोषो यद् मे भृत्यो मन्निदेशभङ्गङ्कदापि न करोति । सततँ मां अनुकूलयितुमेव प्रयतते । अस्मिन् जगति तादृशिका हि स्थितिः सर्वेषाम् न कोऽपि इह स्थिरताम् भजते ॥

[वात्याप्रसारितँ तमो नुनुदे । खण्डदेवकुले आध्मातस्य शङ्खस्य ध्वनिः दिगँतरान् मूर्च्छन् तस्य कर्णे न्यपतत् । सञ्चारितस्य धूपस्य घ्राणञ्चाघ्रासीत् सः । वृष्णश्च देवः ।]

गुणसागरः (किंचिद्विश्रम्भालापङ्कर्तुं समीपङ्गत्वा, नासिकया नस्यचूर्णमादाय) – इदानीं धनार्जनसमस्या अत्युत्कटा वर्तते । यदि तौ वृत्तिकर्मक्षमौ भवेताम् तदा तयोः कृते अन्नजलादिकस्य व्यवस्था अस्ति न

चा ? (जिह्वां दष्ट्वा)

सुद्गरेशः – धनम् तु मया प्रभूतं अर्जितम्। यदि तौ इतोऽपि पञ्चशदू गुणेन द्रव्येण पोष्यौ अभविष्यताम् तदापि धनं संपूर्णं व्ययम् नेयात्। यदि तौ कुसीदवृत्तिमेव कुर्याताम् तद् धनस्य वृद्ध्या एव स्व कुटुम्बभरणङ्कर्तुं शक्नुयाताम् । मयि प्रेते तावेव मे धने प्राङ्कौ। इदानीं तौ विद्यानुपादिनौ प्रतिदिनम् पाठालयङ्गच्छतः। मदाग्रहे तयोः हृदयं स्वास्थ्यम्, विद्याभ्यासवन्तौ तौ यदा विद्यया वृत्तिमवाप्य क्वचित् तिष्ठताम् विद्यया लब्धम् धनम् श्रमेणार्जितं अपि तयोः पृथक् २ स्थास्यति। माता तु तयोः पूर्वमेव परलोकयात्रां प्रयाता। न तस्यै किमपि उपजीवनम देयमस्ति ताभ्याम् स्वकाद् अंशात्। तयोः भाग व्यवस्थाङ्करिष्यामि। विभज्य पैतृकमृक्थम् तस्य २ अंशस्तस्य तस्यैव अवतिष्ठेत्। कुत्सिताचाराः न तौ संक्रामेयुः। सर्वदा सुखोपलब्धिः तयोः भवेत्। अनुस्यूताः अविच्छिन्नाः सम्पदस्तयोः भवेयुः इत्येव अहम् वृणे॥

अयि राम! धूमपानिकामानय।

(रामो हीनाम्बरस्त्रवेषः धूमपानिकामानयति)

गुणसागरः – यौवनोद्भिदविशेषकान्तौ अधिकाधिकसुषुमामभिपुष्णंतौ च हृदयावर्जकसौशील्येन नयनासेचनकेन लावण्येन युते समारूढनारियौवने भार्ये परिणयेताम् इत्यपि च॥

सुद्गरेशः – गेहिन्याः अवसानाद् आरभ्य अहम् दूनमनस्कः तिष्ठामि। प्राप्तम् दुःखम् संचिन्त्यमानम् सर्वदा नूतनमेव भाति। इयम् मे प्रसूतिः अनवद्या

भवेत् परमम् भागधेयम् प्राप्य उच्चोच्चां पदवीं प्राप्नु-
यात् अधिकारे च वर्तेत ॥ [पुत्राभ्याश्चनुरचनाय]
अहम् तु कियद्भ्यो वर्षेभ्यः पूर्वम् व्याधितो दीर्घ-
रोगी सद्यो मरणमाकाङ्क्षामि। अस्मिन् भौतिके पिंडे
नास्ति मे आस्था इदानीम्। सयत्नमुपचरितस्यापि म
रोगः प्रतिदिनँ देहङ्क्षपयति [बाष्पप्रतिरुद्धेन कंठेन]
भार्या चिराद् मृता। अहम् इदानीम् अस्मिन् एकांत-
विध्वँसिनि शरीरे किं स्नेहम् निदधीय? [कृतांतस्य
पौर्वापर्यस्मरणपराधीन इव गद्गदित स्वरः]

गुणसागरः – मा स्म चिंतय। धैर्यं धेहि। स्वस्थो
भविष्यसि। मद्वचनम् न विपरीयात।

सोमसुंदरः – सर्वङ्गृहम् शोधितँ मया। न पुस्तकं
प्राप्तम् कुत्रापि। त्वया कुत्रापि अपहृतम्। न दास्यसि
चेत् चक्षुषः सङ्कोचनिकोचैः विगतजीवितङ्करिष्यामि
त्वाम् ॥

कल्याणसुंदरः – अलम् मां भीषयित्वा। नाहम्
तव एताभ्यो मिथ्याविभीषिकाभ्यो बिभेमि। किं
त्वम् मयि वीगायसे? पुस्तकम् मया चोरितम् इति
कोऽलीकभाषी तुभ्यङ्कथितवान्।

सुंदरेशः – रोगस्य कारणाद् इदानीं मम अत्यायो
व्ययः। प्रतिदिनम् ह्रसिमानमापद्यते तनुः।
[शिरस्ताडयन्] एहि परिष्वजस्व मां पीडितम्। चिरं
उत्सुकोऽस्मि ते। [आलिङ्गितुम् हस्तौ प्रसारयति]।
नामशेषस्य मम स्मृतिं निरंतरं हृदि धारयसि न वा?
(कण्ठबाष्पकीलितवागश्रुप्लुतमुखः कल्याणसुंदरम्
अवगूहते)

गुणसागरः – न तथा अस्य माता अस्मिन् प्रिये

यथा भवान्।

सुक्लेशः (उरः निर्भरं परिरभ्य कल्याणसुन्दरम्) – यथा तेऽम्बा त्वामुपच्छद्यते स्म न तथाऽहम्। (तद्ः मुखाद् अतिक्रन्देण हस्तमाकृष्य गुणसागरम्) भार्या विरहपीडितान् कथम् २ अपि प्राणान् धारयामि। इमौ तनूजौ दृष्ट्वा विरहदुःखम् विसृज्य महदाशा पूर्णमानसो भवामि। यदा तौ सारस्वतसारं गृहीत्वा कलारहस्यञ्च कलयेते विज्ञानञ्च आचार्यभक्तौ विज्ञाय मर्मज्ञानिनौ भूत्वा परीक्षोन्मुखौ परीक्षाम् उत्तीर्य कयाचिद् वृत्त्या सनाथीकरिष्येते कांचिच्छोभनां वृत्तिमधिस्थास्यतः जनीम् उद्वक्ष्यतः तदाहम् २ खी भविष्यामि चिन्तासन्दोहश्च मे निराकरिष्यते। (राजमाहूय) मम कुक्षेराटोपो वर्तते। जातोऽहम् आतुरंङ्गी। न त्वया भोजनम् रुचिसमनुकूलम् निष्पन्नम्। यथा तथा अहम् उदरान्तः प्राक्षिपम्। पचसि गोत्रम्। अनर्होऽसि रसवतीप्रवेशस्य। कालङ्कतम भोजनं सद्य एव पच्यते। उदयो मे व्यथा भूता। एवंविधम् आहारं न कदापि आशयेत् यश्च न रुचिकरो भवेत्। यम् दृष्ट्वा तस्य मुखम् लालाभिः न व्याप्येत। एकमेव रसम् सततं जुषमाण उद्विजते। मध्वपि अनवरतम् न स्वदते। नानारसानां अशनानां सम्पादनं कर्तव्यम् त्वया। यः इदम् ममोपशेते इदम् न उपशेते इति विविच्य अन्नमश्नाति स नो अभ्यमति इदानीं तव काचकूपीस्थिताः काश्चिद् गुटिका आनय (गुणसागरम् प्रति) किं भवान् ह्यः गतः आसीद् गोविन्दराजस्य भाषणं श्रोतुम्? इदानीं स एक एव लोकनायको यम् सर्वे सामान्तदेशिकाः स्तुवन्ति रसा

भाषणम् हृदि कुर्वंति यस्य आज्ञाप्रयुक्ता जीवितमपि तृणम् मन्यँते। स लोकानां वार्त्तालापेषु कथानायकः ग्रामँ २ वाचँ २ न विरमति स। दीर्घदुष्करपर्यटनेन न स श्राँतो भवति जनास्तस्य उक्तिषु श्रद्धां दर्शयन्त। यत्र स गच्छति महान् जनश्रोतः समुदेति। यस्य वचः श्रुत्वा स्वोद्देशमभिवर्तंते जनाः। यावत्प्राणम् स देशसेवाङ्करिष्यति। संख्यातिगामिनो नराः तस्य अनुकुर्वंति। सर्वोपरिवर्तमानः स सर्वान् अन्यान् नेतॄन् सुदूरमतिशेते। यस्तु उदाहरणीभूतो लोकस्य इति किं अल्पीयसी वार्त्ता? एतादृशस्यैव अस्मिन् जन्म सफलम् अस्मिन् भूतले॥

गुणसागरः—यदा वङ्गदेशे चिरकालम् दुर्भिक्षम् पतितम् तदा अनेन कियती सहायता कृता? अस्य वचनानि उरसि धृत्वा जनाः स्वकीयङ्कार्यक्रमम् अध्यवस्यँति। अनेन कृतः प्रारंभो विहँतुम् न शक्यते। परंत्वहम् तत्र गँतुम् नापारयम्। अहम् सायँ नदीम गच्छम्। सा च नदी द्वयोः प्रदेशयोः प्रविभाजनसीमा अस्ति खलु। अशून्यतीरां नदीं दृष्ट्वा मे नयने नत्रैव आसक्ते जाते। अप्सु बालाः प्लवन्ते स्म। अहम् नदीम् विगाहितुम् प्रचक्रमे। कराभ्यां आस्फालिताम्भः पृषताः शीकराः मम शरीरोपरि न्यपतन्। तीरभूमिं आगत्य अहम् किंचिद् उपाविशम्। प्रत्यन्तवर्ति गिरि-पार्श्वे अद्रिनिस्यँदोऽपि परमां सुषुमामुवाह। विजृम्भणोद्गँधिषु कुड्मलेषु संलग्ने अभूताम् मे नयने। तस्मिन् निःशङ्कं मार्गँतने मम्मग्रे प्रतिभासुखरा बभूवुः दिशः। फलभारावर्जिताः उद्यानवृक्षाः पुष्पवृक्ष विभ्रतो लताश्च माम् आराधितश्विरमकुर्वन्। नदी-

मध्यममुदीर्णः एको महान् प्रस्तरः रात्रौ जनान् द्विगुणितभयांश्चकार। अंतरिक्षस्य मोहको वर्णो मम दृष्टिमगृह्णात्। शार्दूलेभ्यो गोगणस्य दोहनवेलाशँसिहम्बारवः समाकर्णि। मम सव्ये पार्श्वे नखाग्रसमुल्लासितश्मश्रुः एको जनोऽपसव्ये च घुर्घुरारवमुखरो वराहो भ्रमति स्म। इदँ सर्वं दर्श २ अहङ्कालमनयम्। एतावता पर्यहीयत गमनवेला। दवीयो गंतव्यम् तत् स्थानम् अल्पश्च शेषः कालः। आनिशीथँ तत्रैवातिष्ठम् ततः गृहमागत्य संवेशाय शय्यागारङ्गत्वा निद्रासुखमन्वभूवम्॥

कमठ! व्रज। इदानीङ्गच्छामि स्वगृहम्। चिरम् इमौ आनन्दौ पितुः नद्धिकरौ भूयाताम्।

(शीघ्रताम् विधाय गुणसागरो निष्क्रांतः)

# द्वितीयोऽङ्कः

सोमसुन्दरः – सखे नीलकण्ठ! यदा अहम् तस्याः ज्ञानाम्बायाः परिस्फुटशरीरलावण्यायाः आलोकलेख्यम् वृत्तपत्रे अद्राक्षम् तदादितः एव मे महान् ज्वरो वर्तते तद्गतचित्तश्चाभवम्। तस्याः उन्मादयितृ रूपँ चक्षुषा साक्षीकर्तुं अहँ अगाम् तस्याः गृहम्। वार्त्तापत्रे तस्याः प्रतिच्छाया निविष्टासीद् यतः प्रवेशिकापरीक्षां कन्याछात्रासु सा अनारतपरिश्रमेण भूयिष्ठान् अङ्कान् लब्ध्वा उदतारीत्। अपृच्छञ्च तस्या गृहलोकान् 'अस्मि तां दिदृक्षे' इति कथयित्वा निवासस्थानञ्चाश्रुतवान् प्रापञ्च तत्र। नासीत् सा तत्र पुनः कञ्चित् कालन्तु तत्र प्रतीक्ष्य गृहँ प्रत्यागताम्

उपचीयमानाङ्गप्रत्यङ्गसौष्ठवां ताम् दृष्ट्वा नितरां भूत्वा ऐक्षे । तदा प्रभृति तस्यामेवाभूद् मम मनोऽभिनिवेशः सा सुदती तु विधातुः ललिता सृष्टिः । तस्याः दर्शन कालादेव सञ्जातोऽस्मि तस्यां समावेशितचित्तवृत्तिः अहमपि पञ्चविंशतिवर्षदेशीयः । साऽपि विंशतिहायन- तां स्पृशत्येव । कुसुमोत्खचितान् तस्याः अलकान् दृष्ट्वा कन्याललामकमनीयं लिप्सुः संवृत्तोऽस्मि । उत्कण्ठितशैशवोऽहम् इदानीम् कथम् तया सह कर- ग्रहविधिम् विदधीय इत्येव चिन्तयामि । कथम् ताम् प्रति अभिव्यक्तमनोरथो भवेयम् ?

नीलकण्ठः — जानाम्यहम् ताम्, तस्याः पितरं नारायणमपि त्वम् रूपेण तस्याः अनुरूपः । अहं तस्याः पित्रे निवेदयिष्यामि तव मनोरथं तथा च यतिष्ये येन तस्याः तुभ्यं वाग्दानं भवेदन्ते च करग्रहं वितनुयाः । सा च त्वां आत्मानुरूपकृता भवेत् । साऽपि कुले प्राप्तसम्भवा त्वमपि स्व पितरं अनुहरसि सौभाग्येन ॥

[द्वारमाहत्य प्रविष्टो वेङ्कटेशस्तस्य मित्रम् ]

वेङ्कटेशः — कथं त्वमेवं विवर्णभावं प्रपन्नोऽसि ? जानाम्यहं त्वं मनोविकारस्य गमनीयः संवृत्तोऽसि कामवशञ्च गतोऽसि । उपचीयमानया मदनव्यथया बाध्यमानो वलितपीनवर्णास्य सञ्जातोऽसि । नाहं त्वादृशं विपरीतचेतसं युवानं अद्यावधि अपश्यम् इमं देशं पर्यन्तादेकादारभ्य पर्यन्तान्तरं बम्भ्रमन् यद्यपि प्रतिकूलमङ्कुरितेन अनुरागेण ग्लपितः स्वरुचिरदेह- यष्टिं प्रतिदिनं कृशतां विरूपताञ्चानयसि । अहम् तु बहुदिनान्तरितदर्शनेन सोत्कण्ठं प्रतीक्षमाणेन त्वया

भाव्यमिति कृत्वा त्वां मिलितुमागतः। त्वम् तु विद्यां-
तरङ्ग ऽनङ्किताकल्पनीयदैवाघातप्रहत इव खिन्नतां
अनुभवसि। कथमिदम् ?

नीलकण्ठः — अस्माकं मित्रम् मम सम्मुखे तस्यां
ज्ञानाम्बायां स्वमनोऽनुरागमुद्घाटयामास। स तस्यां
बद्धभावोऽस्ति। अहम् अस्मै दत्तवचनोऽस्मि यदहम्
ताम् त्वय। मद्दर्शेन उपयंत्रा युक्ताङ्करिष्यामि। त्वाञ्च
तयां सह परिणाययितुम् सर्वात्मना यतिष्ये। द्वंद्वञ्च
योजयिष्यामि। वधूवरौ सङ्गमयिष्यामि। प्रतीक्षस्व
तावत् कञ्चित् कालम्। अहम् निस्तीर्णप्रतिज्ञो भवि-
ष्यामि। त्वञ्च शांतान् निश्वासान् लब्ध्वा चेतनां
अधिगमिष्यसि। परंतु अस्य तु धृतिः स्तिमिता रतिश्-
च्युता। एष तु गुरुव्यथम् हृदयम् अवलँबितुम् न
प्रभवति। गच्छामि तावद् अस्याभीष्टपूर्त्तये।

(इति निष्क्रांतः)

वेङ्कटेशः — यावद् अयम् स्वमुखांतरितं तव मनो
रथन् तत्र कथयित्वा कार्यं सम्पाद्य तस्याः सकाशात्
काममवाप्य इहागत्य शुभवार्त्तासुखेन तव हृदयम्
पूरयिष्यति त्वञ्च प्रणयोद्रिकसंपूर्त्यैकसुखभाग्भवि-
ष्यसि तावद् आवां गोष्ठीसुखमनुभवावः। किंचिद्
आत्मानम् संयम्य कथावार्त्ताभिर्मनो विनोदयितुम्
बुद्धिं कुरुष्व। अलमनेन विवेकविश्रांतेन व्यवहारेण

नीलकण्ठः [प्रत्यागत्य] — ज्ञानाम्बायाः पिता तव
प्रतिच्छन्दकं जन्मनः प्रभृति आनदात्वचरितावबोधकं
तव इतिहासम् दिदृक्षते। कस्मिन् वंशे उत्थितोऽसि
त्वम् किं च तव देहपरिमाणादिकम् इति सर्वं स
विविदिषति॥

[सोमसुन्दरः सर्वं तद् वृत्तान्तं संगृह्य नीलकण्ठाय दत्त्वा तं प्रस्थापयामास।]

वेङ्कटेशः – त्वं सुखमेव मर्जन्(?) अभुक्थाः दुःखम् न समवेदीः। अतः त्वम् अपरिचितपूर्वोऽसि दुःखस्य। किंचिदपि दुःखलेशः त्वत्कृते व्यसनौघः सञ्जायते। यदा त्वं आपद्यसे तदा बहुतरं क्लिश्नासि। तव मन्त्रेण निश्चितोऽर्थः प्रक्रमः आस्थितः। सर्वथा सफलो भविष्यति सः। मन्मथस्य पराङ्कोटिमारूढोऽसि। बलवदुत्कण्ठितं तव हृदयम्। रणरणकखिद्यमानमानसः त्वं सततं हृदयदयितमेव ध्यायसि। किं त्वया कथितं तत्कार्यं यद् अहङ्कन्यासुद्वोढुम् निश्चितम् अवगतमम्?

सोमसुन्दरः – अकथयम्। सोऽब्रवीद् 'अपि परिणय अपि तिष्ठ। नाहम् ते याथाकामीं विरुन्धे। यदा तस्याः पिता कन्यायै यौतुकम् दास्यति तदा अहमपि तस्यै हरणीकृतश्रीः स्थास्यामि। अस्यां कुमारावस्थायां तु तस्याः दर्शने नापि नयने सफलयितुम् न प्रभवामि। असमशरज्वरदूनः कथमहम् एवमवस्थास्ये यदा यौवनेन वपुषि पदं कृतम्। मन्मथविकृतं मनस्तस्याः प्रेम्णा ममासजत् इदानीं विफलं विलम्बनम्। तस्याः जनयिता त्वरितं तस्याः पाणिम् ग्राहयतु मम कामं पूरयतु मम मनसिजतापं शोषयतु सुखञ्च वितनोतु तदेवाहम् स्व भाग्यं श्लाघयिष्ये॥

नीलकंठः (प्रतिनिवृत्त्य) त्वरिततरेण पदेन अहम् तत्र अगमम्। द्वारे च तस्य एकः प्रतिहारी आसीत्। तेन सह संवादमकरवम्। पिता तु तस्याः गृहाभ्यन्तरे पराद्ध्यवर्णास्तरणो पर्र्यङ्के महार्हासने संस्थितः शङ्ख

श्रुत्वा कः प्रतिहारमुपादिष्टवान् प्रोवाच। आगच्छतु तावद् इति मां अंतरागंतुमन्वजानात्। अंतर्गत्वाहम् अद्राक्षम् प्रभाविशेषोदयेन स व्यरुचत्। मां स्वागतं व्याहृत्य अवसितेषु कुशलानुयोगेषु स मदागमन-कारणमप्राक्षीत्। तत्र दृष्टम् एतावद् सन्नासेदिवान् अहम्। मत्सम्मुखे स धाम्ना अराजत। तदाहमथाश्रौ-षम् –

सुदर्शनो यः पिपीलिकावृत्त्या धनं संचेतुं अयतत पश्चिमे वयसि सुखं निर्वेक्ष्यामीति कृत्वा यश्च वृद्ध-पूर्वः सम्प्रतिसमृद्धो यस्य च गृहम् गृहांतराणि विशेषयति रामणीयकेन पुत्रद्वयोः पिता। सोमसुंदरः ज्यायान् यवीयांस्तु कल्याणसुंदराभिधः। तस्य सुदर्शनस्य परिग्रहस्य इयत्ता नास्ति। इदं पौरस्त्यम् गेहमपि तस्यैव। अंतिके च रामनाथचरम् वेश्म अपि संप्रति तस्यैव। स दिष्ट्या पुत्रलाभेन वर्धते। न स साधारणो जनः। एतावद् धनं यस्य व्ययितं भवेद् जन्मांतरेषु। सुखसाधनानि संविधातुं यस्य सर्वथा पर्याप्तं धनमस्ति यश्च धनेन प्रमोदते तस्य ज्यायान् पुत्रः सोमसुंदरोऽतिक्रांतबाल्यो यौवनपदवीमारूढो ऽपूर्णी संप्रति भार्य्य चारणी ।। स तु वयसा पञ्चविंशकः। कियतीभिः समाभिः भवतः कन्यायाः पूर्वो वयसा। पिता च एकशोषम् समुपार्जितम् संपदं जलवत् प्रवाह्य पुत्रौ उद्वाहयितुं जीविकाप्रसंगे च योजयितुमीहते। सोमसुंदरो विद्यागृहीतो आदौ महतीम् व्यापृतिं न लेभे। परंतु इदानीम् विपुलायन् वृत्तिं वर्तयन् गृहमंत्रिणः सचिवपदे नियुक्तोऽस्ति अर्जुननगरे। पञ्चमासावकाशम् प्राप्य स्वागतः।

भवतः कन्या रूपयौवनगुणसम्पन्ना सुशिक्षिता अनवद्यपेशलाङ्गी तस्यानुरूपा । स तु दृढाङ्गो दर्शनीयाकृतिः शोभातिशयम् पुष्यन्त्याम् तस्याम् चेतसि रागमबध्नात् । तस्यानुरागोऽतिभूमिङ्गतः । स मोदितं सोत्कटम् ताम् कामयते । स तु आत्मवंशप्रवर्तनाय ताम् कामयते । किमत्र मन्यते भवान् ? सोऽब्रवीद् यदि तौ समानगुणशीलौ भवेताम् देहपरिमाणादिभिः मिथः समनुरूपम् भवेत्तदा तयोः विवाहो न दोषम् ग्रहीष्यति । तदाहम् इहागत्य उपकरणानि सर्वाणि आदाय पुनस्तत्र अगमम् । तत्सर्वम् सम्प्रेक्ष्य उभयोः रूपसंवादिनीम् आकृतिम् अभिवीक्ष्य स्वदुहितरम् सोमसुन्दराय घटयितुम् निरचैषीत् सोमसुन्दरे तु स बहुमतिमदधात् । आत्मजाम् तेन संयोजयितुम् स्वानुमतिमदात् । तदा च कार्तान्तिकमाहूय शुभम् मुहूर्तमपृच्छत् यस्मिन् क्षणे तयोः वधूवरयोः करौ संयोजयेत् । स मौहूर्तोऽवादीद् आगामिनो मासस्य मासतमस्य दिवसस्य रात्रौ दशवादनसमयः शुभम् लग्नम् अस्ति । तदा स मामब्रवीद् आगामिमासस्य अंतिमे दिवसे परिणयम् रचयित्वा कन्यादानम् सम्पादयिष्यामि कन्याञ्च तस्यै प्रतिपादयिष्यामीति ।

सोमसुन्दरः — आगतः स समयो यदा आवाम् वेद्याम् उपविश्य विवाहविधिम् निर्वर्तयिष्यावः । प्रतिनवयौवनोन्मेषमधुराम् ताम् उपयंस्ये । दर्शनक्षणोद्भिन्नसङ्कल्पयोनिस्तस्याः सान्निध्ययोगाद् नानाविधम् सौख्यम् अनुभवन् तस्याम् तोकानि प्राप्स्यामि । अनिलकंपितासु उद्यानपरम्परासु विहरंतो आम्रमञ्जरीः विधवति समीरणे प्रवृत्ति

अहिंसां नृत्ये विश्रान्तिस्थलमवाप्य प्रच्छन्नेङ्गितैः अन्योऽन्यम् प्रति स्व मनीषितं कथञ्चिदूचुः। चिरात् दूरङ्गस्य मे सम्प्रति जाता स्वस्थता ईप्सितञ्च उपस्थितोदयम् सञ्जातम् ॥

[एकस्य समारोहस्य वीणानां वीणाझङ्कारमिश्रसुभग मृ गीतं प्रावर्तत। निकटवर्तिदेवालये अर्चकः शङ्खमापूर्य दध्मौ। जलजस्य शब्दः गीतवाद्यध्वनिमातुलांतु वीणा गृहस्य दिशि विदूरं मरुन्नीतोऽश्राव ॥]

गच्छामि तावत् पित्रे निवेदयितुम् यत् किमपि फलितं मे मनोरथस्य। वरयात्रिणः आदाय वधूगृहम् प्राप्स्यन्ति तदा विवाहे संवृत्ते समुदितेषु वेषु ब्राह्मणेषु स एव दशरथभूमिकायां वर्तमानोऽभिनयं करिष्यति सम्पाद्य च पाणिग्रहणमावयोः कृती भविष्यति। वर्तते मेऽशनाया। जातोऽस्मि सम्प्रति संलीनकुक्षिः। (भृत्यमाहूय त्वरय मे भोजनम्। आगच्छामि तावत् ॥

# तृतीयोऽङ्कः

[अन्यत्रकुप्रच्छदेऽक्षिप्रीतिकरे आस्तृतसमे विष्टरे उपविष्टः सुमेरुचन्द्रः]

सुमेरुचन्द्रः—कुसीदवृत्त्या वर्तयन् अहं विंशति वत्सरात् आगमयम् नाहम् एवं त्वयि विश्वसिमि। स्वहस्तपरिचिह्नितं उपगतं मे देहि। तदा एवाहम् त्वाम् धनं दास्यामि।

गजपतिः (विंशति रूपकान् प्राप्तुम् एकं स्व हस्ताङ्कितम् उपगतं लिखति ददाति च सुमेरुचन्द्राय)

सुमेरुचन्द्रः—त्वयि लिख यन्मया एतद् धनम्

पञ्चकँ शतँ वृद्धिरपि देये । [तदपि लिखति गजपति ]

सुमेरुचन्द्रः – नैतद् पर्याप्तम् । अहँ तु सबँधकमेव ऋणम् ददामि । गृहङ्गत्वा पात्राणि सज्जीकृत्यानय । पात्राणि बँधकमस्य ऋणस्य । शतावरं ऋणम् जङ्गम-धनप्राप्त्या ददामि ।

[गजपतिः गृहङ्गच्छति । प्राप्तो रङ्गनाथः]

रङ्गनाथः – मया अपेंक्ष्यते पञ्चसहस्रम् रूपकाः ।

सुमेरुचन्द्रः – त्वम् तु राजपदे नियुक्तः । किं भूतँ ते मासिकवेतनस्य ?

रङ्गनाथः – अहम् उत्पन्नभक्षी । यदेवाहमर्जयामि तदेव व्यययामि । नाहम् सधनः । वेतनात् किमपि न शेषयामि ।

सुमेरुचन्द्रः – एतावद् ऋणँ नाहम् दास्यामि आधिम् विना । किमपि स्थावरं धनमस्ति ते तन्मह्यम् समर्पय आधिरूपेण ।

रङ्गनाथः – अस्ति मे एकँ गेहँ यस्मिन्नहँ निवसामि

सुमेरुचन्द्रः – तद् आधिरूपेण मह्यम् समर्पय । तत् फलभोग्याधिः भविष्यति । तस्य गृहस्य भाटकम् मया उपजीव्यम् । आधेरुत्पन्नम् धनँ मया तावद् उपजीव्यँ यावद् मूलधनँ द्विगुणमुपजीवितम् भविष्यति । तदनँतरं आधिमत्वाम् प्रत्यर्पयिष्यामि । आधेः द्विगुणे धने प्रविष्टे सति आधिः तुभ्यम् देयः । चतुष्कँ शतँ सवृद्धिकमृणँ यदि आधेरुत्पन्नम् धनमपाकर्तुं न पर्याप्तँ तदा त्वया वृद्धिमपाकर्तुं मूलधनशोधनाय च धनम् देयम् । तदा एव आधिर्मोक्षो भविष्यति । यदि त्वँ न किमपि दास्यसि तदा साक्षिसन्नद्धँ आधिः विक्रेतव्यः । अन्यच्च ! इदँ गेहम् पैतृकमृणँ उत वा

स्वोपार्जितेन द्रव्येण पितुर्द्रव्यानुपयोगेनार्जितेन धनेन वा त्वया क्रीतम्?

रङ्गनाथः—पितुरागतम्।

सुमेरुचन्द्रः—किमर्थम् ऋणं याचसे त्वम्? यदि तु व्यावहारिकं न्याय्यमृणं क्रियते त्वया कृच्छ्रे आपतिते वा ऋणं क्रियते तदा तु अयं आधिः ऋणं शोधयेत्। यदि सुरापानद्यूतस्त्रीसंभोगार्थम् ऋणं क्रियते तदा ऋणपरिशोधनाय अयमाधिः न विक्रेतव्यः। अस्ति ते तनयः कश्चित्?

रङ्गनाथः—द्वौ सुतौ मे।

सुमेरुचन्द्रः—तदा विना ऋणशोधनं आधिः मोदयते। तयोरपि धनभाक्त्वम् पैतृके ऋक्थे। तौ अपि भागहरौ अस्मिन् गृहे।

रङ्गनाथः—तनयापरिणयाय धनमपेक्ष्यते मया। इदं तु न्याय्यमृणम्।

सुमेरुचन्द्रः—एकं साक्षिमद् आधिलेख्यं त्वया कार्यं यदहम् पञ्चसहस्रं रूपकान् ऋणं कृत्वा इदं गृहं आधिरूपेण सुमेरुचन्द्रश्रेष्ठिनि न्यस्य भोग्याधिं करोमि। अस्य भुक्तिः तेनैव प्राप्या। तेनैव भुज्यमानो आधिः यदा सवृद्धिकमृणं शोधयेत्तदा ऋणे शुद्धे आधिमोक्षो भविष्यति आधिश्चाहम् लप्स्ये। मयि अमति प्रोषिते मृते वा मम तनूजौ धनं श्रेष्ठिनि निक्षिप्य आधिं लभेयाताम्। दायादस्तु भ्युद्धरेताम्। लेख्यमुत्पाटयेताम्। लेख्यश्च अनुद्भावितदोषं भवेत्। अतो गुणवन्तः साक्षिणः एव प्रामाण्यकारणम्। तेषां साक्ष्यमेव विवादनिवर्तकम् भविष्यति। अतो गुणिनः साक्षिणः एव मार्गयितव्याः। साक्षिमत् तु लेख्यं न

शक्यते दूषयितुम् साक्षिवचनेन सकलदोषोद्धारात्।
अतो लेखमेकमानय।

(प्रविशति वेङ्कटाचलः)

वेङ्कटाचलः — कथं त्वं पत्रम् विप्रलिपयसे ? अप्रतिकारानुरूपेण केनापि कारणेन भवितव्यम्।

सुमेरुचन्द्रः (अतक्रोदनामर्दितमस्तकः) — अहम् परिणतवयस्को जातः अलङ्घनीयो हि विधिविभवः नास्ति मे कोऽपि औरसः। आसीद् मे एका भार्या। यदा सा अंतर्वत्नी आसीत्तदा सा स्नानागारे शिलोपरि अपतत्। तेन तस्याः भ्रूणहत्या सञ्जाता। अनन्तरमहम् तस्यां दोहदलिङ्गानि अपश्यम्। सा गुर्विणी कुक्षि-कारागारे नवमासान् पच्यमानम् प्रसवसमये बहिर्-दोषपोषमेकम् तनूजमसूत; गर्भमोचनात् सा तथा कृशोदरी जाता यत्तस्याः जीवनाशापि नासीत्। यथा कथञ्चित सा आत्मानमरक्षत्। पृथुकञ्चापि स्व पोषम् अपुषत्। मूत्रमलिनेषु आर्द्रेषु वस्त्रेषु उषित्वा शिशोः मूत्रपुरीषादिकं निःसङ्कोचं शोधयित्वा तस्याङ्गरागानि हरंती निजोत्संगे खेलंतम् तमपालयत्। तस्यां सुतं लब्ध्वा नाहम् प्राभवम् हर्षाय। अजानन्त्याः तस्याः शरीरकार्श्यं न तथा दूरीभूतम्। स्तनंधयं स्तन्यन्ती शाययंती सा दोहदव्यथां विस्तीर्य उल्लाघा नाभवत्। एकदा सा उद्भ्रान्तचेतनाभवत्। अहं वैद्यम् आह्वयम् आनयञ्च गृहम्। स तथा पथ्योपाध्यान् व्यरचयद् यैः सा प्रत्यागता भवेत्। दिने दिने तस्याः व्याधिः उद्वलिता अभवत्। एवं सा कष्टेन कतिपयान् दिवसान् यत्र सा कष्टया मृता। अपरस्मिन् दिने सायंपलाद-सितायां प्रातस्तन्यां वेलायां सा व्यसनातिभाराद्

उत्क्रांतजीवितोभवत्। करुणापायविभिन्नवर्णां ताम् दृष्ट्वाहम् दुर्निवारबाष्पवेगं निवारयितुमपारयन् उन्मुक्तकण्ठं व्यलपम्। तस्याः भृशमुत्कण्ठे स अहम् तस्याः अंत्यकर्म विधायाहमागतः। गतेषु वासरेषु कतिपयेषु बालकोऽपि मातरमनुसंस्थितः। तयोः विरहसंतापेन दग्धहृदयो दुःखातिरेकाद् अहं तल्पे लगात्वविक्षेपमनाभ्यम्। पुत्रादयोऽभिमतो अर्थाः। तेषां समवाये सुखं व्यवाये दुःखम्। तयोः स्मृतिः मम हृदयाद् न प्रसृता। इदानीमहम् जराक्रांतः पुनी यामि। पितरावपि मे मां अपरिमितसंपत्तिभागिनम् विधाय दिवङ्गतौ। अस्ति मत्सविधेऽपारं धनं परंतु न कोऽपि दायादहरः। संततिच्छेदनिरवलम्बना मूलः पुरुषावसाने सम्पदः परमुपतिष्ठंति॥

गजपतिः (पात्राणि आधाय)

सुमेरुचन्द्रः (पात्राणि आपणे निधाय विंशतिं रूप्यकान् आदाय) – गृहाण। गच्छ।

(गजपतिः गच्छति)

अतोऽहम् इत्रिमम् सुतमादाय सर्वं विभवजातं तदर्पणङ्कर्तुमिच्छामि।

[आगतश्च रङ्गनाथः]

रङ्गनाथः [आधिलेख्यं तस्मै दत्त्वा] – अनुगृह्यतां अहं धनेन।

सुमेरुचन्द्रः [पञ्चसहस्रम् मुद्राणां तस्मै समर्प्य लेख्यञ्च गृहीत्वा] – इदानीमिदं लेख्यं मया सम्यग्रक्षणीयम्। यदीदम् लेख्यं मेदितं छिन्नम् स्वेदेलोक्लिखितं जीर्णं विगतं विदीर्णं द्विधाकृतं म्लिष्टाक्षरयुतं मग्नं वा जायेत तदा मे पञ्चसहस्रं रूप्यकाणां नष्टम्

न मया एतल्लिखितं इति तव प्रत्ययस्याल्पमात्रम् ।।
पञ्चसहस्रं रूप्यकाणि तु नार्पयिष्यामि मया । पञ्च
सहस्र नष्टेऽहम् तु जीवन् एव म्रियेय । लेख्यान्ते कृतः
सवृद्धिकम् त्वया शोध्यम् ।।

[निर्गतो रङ्गनाथः]

नाहमध्यैषम् तस्यां जीवितायां न आपणमन्यम्
सुरस् । अस्ति मेऽग्रजस्य एको भ्रातः सुमतिनाथः
तस्य तनुजो मम भ्रातृव्यः सम्भवनाथः वयोदशाब्द-
देशीयः । तं अहं स्वभ्रातृव्यं कन्यकम् सुतं विधाय
सर्वमेतद् द्रव्यं तस्मै दित्सामि ।
जिनदास ! जिनदास ! [जिनदासमाहूय] आनय
तावत् पितापुत्रौ सुमतिनाथसम्भवनाथौ ।
[जिनदासः प्रस्थितः । आगतः खल्पूः अनावृतशिरो
ऽनुपानत्कः चरणदासः शीतमपनोदितुम् पटच्चर-
कन्थाद्वारावृत्य नग्नम् शरीरम् ।]
अयि चरणदास ! संमार्जन्या च भुवं परिष्कृताम्
विधाय शोधय जलधारिणा । मलं परिमार्जय । दुर्गन्धः
समुदेति । (रूप्यपादं कोषादुद्धृत्य तस्मै दत्तवान् ।)

वेङ्कटाचलः — कुत्र भवतो गृहम् ?

सुमेरुचन्द्रः — आपणस्य पृष्ठभागे गृहं तत्र मम
आवासः । मुखभागे च आपणः कल्पितो जीविका च
आयोजिता । गतो ग्रीष्मः कालः । एष निदाघावधिः
दक्षिणदेशे तु शुचिव्यपगमे सुखमनुभूयते ।

वेङ्कटाचलः — कोऽस्ति तव गृहे ?

सुमेरुचन्द्रः — न कोऽपि इदानीम् । अन्य एव गृहस्य
कुञ्चिका जनन्यै दत्ता ।

वेङ्कटाचलः — यदि स किं चेच्चोरयितुं गच्छेत् ?

सुमेरुचन्द्रः – नास्ति तत्र किमपि चोरयितुम्। अहँ आत्मना सहैव सर्वं नयामि आनयामि च। न कोऽपि चौरो मम द्रव्यमपहर्तुं शक्नोति।

(जिनदासः प्रत्यागतः)

सुमेरुचन्द्रः – कुतो विलम्बितं त्वया? अद्य किंचिद् मिष्टान्नम् प्रसाधय।

[गतो जिनदासः]

सखे! किं रुष्यसि मे यद् आगत्यैव मां अन्तिकाद् निष्क्रामसि?

वेदगिरिः – कार्यवशात् शीघ्रं गच्छामि। भर्ता कालः कृतो येन मया कृत्यमेकम् निर्वर्तनीयम्। अतः आज्ञां याचे। पुनः मिलिष्यामि।

[आयातौ सुमतिनाथसम्भवनाथौ]

सुमेरुचन्द्रः – जानीतः एव भवन्तौ नास्ति कोऽपि ममानुजातः। भार्या मे एकम् सुतम् अजीजनत् यस्तु गतासुरभवत्। मम वँशविच्छेदो भविष्यति। नास्ति कोऽपि मे वँशोद्भवः। अतोऽहम् काङ्क्षामि भवतः पुत्रं एनँ सम्भवनाथम् दायादम् विधातुम्। अयम् मे दायँ हरेत् सुखञ्च जीवेत्। अद्यन् मे क्रीतनामा पुत्रः। एकम् दानलेख्यँ लिपिज्ञेन लेखयित्वा राजमुद्रया मुद्रितम् प्राड्विवाकादिहस्ताङ्कं तस्मै ददामि। गृह्णातु तदिदम्। अयमेव नैष्ठिकम् विधिम् विधास्यति मे। मम तु प्रात्यहिको दशाणका एव उत्सर्गो भवति। सर्वं वित्तराशिरस्य भवतु॥

वेङ्कटाचलः – यदा कश्चिन्मनुष्यः शाखाहीनोऽनपत्यः पतिश्च जायते तदा तस्य मनुष्यस्य परिग्रहस्तस्यैव परिग्रहे इति अतो जायते यत्सादृश्यम् विभक्तः यथा एकः

स्रोतःप्रवाहो यदा द्विधा विभज्य प्रवहति तदा एकः शाखाप्रवाहो यदा अवरुद्धगतिकोऽनन्यगतिकोशाखः हीनो वा भवति तदा प्रतापरानिको भूत्वा तस्य जलौघ स्तस्मिन् एव शाखाप्रवाहे पतति यस्माद्विभक्तो भूत्वा अयमागतः ॥

# चतुर्थोऽङ्कः

महीपालः – इदानीं कुत्र तव व्यापृतिः ?

वेणुगोपालः – इदानीं वैद्यनाथस्य अगदङ्कारस्य औषधालये व्यापृतोऽस्मि ।

महीपालः – कुत्र गम्यते त्वया ?

वेणुगोपालः – गच्छामि अहम् सुन्दरेशस्य गेहम् इदम् भेषजम् तत्र प्रापयितुम् । दत्तमस्ति मे स्वामिना तत्र प्रापणाय ।

महीपालः – ग्राहकः एव आपणम् याति न तु आपणिको ग्राहकस्य गृहङ्गच्छति । नास्ति तस्य गृहे कोऽपि यो भेषजमादाय गच्छेत् ?

वेणुगोपालः – अस्त्येकः तस्यात्मजः कल्याणसुन्दरः । स पितरमुपचरति । पिता च तस्य सुघटितशरीरोऽपि इदानीम् पाण्डुवर्णः खिन्नो निस्तेजवदनो निस्सत्त्वो जातः । मुमूर्षुः मञ्चके शेते । तं विहाय कथम् इहागच्छेत् ?

महीपालः – किं भूतं तस्य द्वितीयपुत्रस्य । आस्ताम् तस्य द्वौ सुतौ इति श्रुतं मया ।

वेणुगोपालः – द्वितीयः सोमसुन्दरो ज्यायान् । स च ज्ञानाम्बाम् एकाम् विवाहयाम्बभूव । इदानीम् स

रामगढ़े राजपदे नियुक्तो कार्यव्यापृतो न इहागन्तुम् शक्नोति।

महीपालः — कीदृशी दशा सम्प्रति सुन्दरेशस्य ?

वेणुगोपालः — भिषजा स्वामिना तस्य नाडीपरीक्षादि कृतम्। व्याधेरुद्रेको जातः। "नास्ति रोगोपशमस्याशा। आप्स्यते कालनिमन्त्रणं तेन शीघ्रमेव। सज्जीभाव्यम् भवता अनिष्टव्यतिकराय। ईश्वरेच्छा बलीयसी। दैवानुयोगमुल्लङ्घयितुं कः शक्नुयात्। तदिच्छाधीनैव भाव्यम्' इति अशंसिष्ट स्वामी रहसि कल्याणसुन्दराय। आसन्नमृत्योः आशाभङ्गो मा भूत् इति औषधं प्रेषितं तेन। साधयामि तत्र। इदमौषधम् तत्र प्रापय्य इहागतोऽस्मि॥

## (विष्कम्भकः)

सुन्दरेशः — निरुपायरोगेण ग्रस्तस्य नास्ति मे जीवनाशा सम्प्रति। द्वि अह्नि अपि गमिष्यामि इत्यपि संशयग्रस्तम् वचः। पाण्डुरकृशोऽस्थिचर्मात्रावशेषः कथमहम् जीविष्यामि चिरकालम् ?

कल्याणसुन्दरः [जानुनतोपविष्टः] — अलं शोचनातिरेकेण। प्रबलदैवानुकूल्येन सर्वं सेत्स्यति सुस्थो च भविष्यति भवान्।

सुन्दरेशः [दीर्घमुष्णं निश्वस्य] — इदानीं प्रकुपिता रुक्। इमां रात्रिमपि न संतरिष्यामि इति प्रतीयते। वैद्येन उपचारः कृतः औषधञ्च दत्तं मया च सेवितम् नाहं औषधिहतव्यथोऽभूवम्। निर्बलतया स्वरभङ्गश्च जातः। इदानीम् निवृत्ता शरीरवृत्तिः इत्यन्तोऽग

अप्रतिबोधशायी च भवितास्मि। त्वया मम अविश्रांत-सेवा आचरिता। पितरि शुश्रूषयितव्यम् इति धर्मम्। त्वमिदम् धर्मम् सम्यगपालयद् अस्याम् व्यापदि। दुर्जनबंधुरेव वास्तविकः बंधुः। अतः त्वं मे सुतम् अतनोः। मम दृष्ट्या त्वममूल्यः। त्वं श्रियाधिक : स्फुरेः इति मेऽभिलाषः। अहम् सर्वं आत्मनो परिग्रहं तुभ्यं प्रतिपादयितुम् इच्छामि। [मञ्जुवाचा] परमा नन्दसंभूतो भूयाः इत्येव अहमाशासे आपन्नार्तिहरम् परमेश्वरञ्च याचे। [वाष्पकणाकुलेन चक्षुषा] उप-स्थितो नौ वियोगः। चिरं जीव (अश्रुकणान् अपनयन् माहूमुपगूह्य कल्याणसुन्दरम्) त्वं मम अनेकविधां परिचर्यामकार्षीः। विधेयवद् मम वचने स्थितः। इदानीं नास्ति आशातंतुरपि मम जीवनस्य। (पुनः वाष्पजलमुन्मृज्य) संतुष्टोऽस्मि तव सेवया। अहम् त्वयि प्रसीदम्। मम प्रेम तवोपरि पर्यचीयत। अतो ऽहम् तुभ्यमेव सर्वं धनजातं समर्पयितुम् इच्छुः। त्वमेव मे और्ध्वदैहिकं कुरुष्व। आनय तावद् धर्मा-धिकारिणम्। एकं दानलेख्यम् लेखयामि ॥

(धर्माधिकारिणमानेतुम् निष्क्रांतः कल्याणसुन्दरः। पूज्यपादाः पितृपादाः कार्यवशाद् भवंतम् दिदृक्षन्ते आसि धर्माधिकारिणं दिदृक्षे इति च मां उदितवंतः। अतः आगच्छतु भवान्। इति धर्माधिकारिणे निवेद्य समानीय वटिकार्धेन प्रत्यागतः कल्याणसुन्दरः)

सुन्दरेशः [सहजस्वरेण] —भो धर्माधिकारिन्! अयं मे सुतः मां बहुतरं शुश्रूषते। अस्ति मेऽन्यः एकः पुत्रः सोमसुन्दरनामा। स मां कृत्स्नशः उपेक्षते। स बहिर्नगरे निवसति। स मदर्थे किमपि कर्तुं न पारयति

अयमेव मे तनूभवो मे आज्ञां शिरसा वहति। नायम् कदापि मम निदेशमल्लङ्घयत्। न तेन कदापि दर्शितः पारुष्यलेशो नोदीरितः कटुशब्दः। अहम् इदानीं भव-सन्नप्रायोऽवस्थितः। (बाष्पौघम् सयत्नम् रुन्धन्) अयं मे पुत्रः सुखोपभाग्भवेत्। अस्मिन् स्निह्यते मे हृदयम्। अस्याहम् अतिसमृद्धिं मनसा आशंसामि। उपस्थितो मे प्रयाणसमयः। (उन्मिताश्रुभिः) अयम् सर्वदा मे निदेशे स्थितः। मम निदेशात् न कोऽपि तं अपाकर्तुम् अशक्नोत्? सम्प्रति उपस्थितमाधवो-विश्लेषदुःखम्। अहं सर्वस्वम् अस्मै विश्राण्य वीतचिंतो बुभूषामि। एष मे सर्गः। अहम् सर्वं अस्मै प्रतिपाद्य जीवनयात्रां समापयितुम् इच्छामि। स्वेच्छातोऽहम इदं दानलेख्यङ्करोमि न कस्यचित् बलात्कारेण। निर्भिन्नार्थतोकमहम् इदं लेखयामि यत्र कोऽपि मम परिग्रहे भागाहारको भवेत्। अयम् कल्याणसुन्दर एव केवलं मम दायहरो भवेत्। मनो-रथस्य प्रतिबन्धमाशङ्कमानोऽहम् इदं स्पष्टयितुम् त्वरमाणमानसोऽस्मि येन कोऽपि मे मृत्योः पश्चात् अनेन कल्याणसुन्दरेण सह मम स्वत्वविषये विवदेत् स्व भागम् वा कल्पयेत्। सकलमणिजातं स्थावरं जङ्गमञ्च मे स्वत्वं अस्यैव भविष्यति। इदमहम् पौरा-णोदपुरस्सरं ब्रवीमि यत् सर्वमिदम् धनं मया परि-श्रमेण उपार्जितम्। अतः इदम् अस्य विभागकर्तृत्वम् मयि आयतते। न कोऽपि मदाज्ञां विहाय तत्र च अधिकारं स्थापयितुम् शक्नोति। इदमहम् दृढोक्तिपूर्वं कथयामि यन्मया स्वयमेकाकिना परद्रव्यानुपयोगेन इदमर्जितम् वित्तम् न च कस्माद् अवाप्तम्। अतोऽहं

-स्वेच्छया दातुमीशः। इदं लब्ध अभिज्ञमुद्रया मुद्रितं करसमर्पितम् साक्षिणां समक्षञ्च॥
[साक्षिणो गताः, कल्याणसुन्दरो धर्माधिकारी च किंचित् पूर्वं चेतासू। पुटिकार्थारभे सुन्दरः परेतासुरभवत्। कल्याणसुन्दरो धर्माधिकारिणा सह वार्त्तयति।]
कल्याणसुन्दरः (आनन्दबाष्पसंकुलसंफुल्ललोचनः) इदानीमेव मे मनः प्रमोदयति इदानीं स निधनं प्राप्तः स्व जीवनकाले सं मनः परिवर्तयेद् दानलेख्यमिदम् भिन्द्यात् इत्यासीद् मे आशङ्का। परलोकजुषि पितरि इयमाशङ्का दूरीभूता। निस्संदेहीभूय इदानीमहम् अखिलं वित्तजातं उपयुञ्ज्ये। इदानीं मे हर्षो तनौ न माति। तस्मात्त्वमुपकारी करो मां समानन्दयद् असद्रम्॥ गच्छाव आवां रसवतीं जलपानञ्च किञ्चित् करिष्यावः खाद्यं वस्तु च किञ्चिद् अत्स्यावः॥
(पात्रगृहकल्पा कटाहे वारि संक्वाथ्य पार्श्वे निधाय पयः श्रीणाति स कल्याणसुन्दरः अग्निञ्च उपकल्पतिस्म। स्फुलिङ्गाः उड्डीय तस्य आनने पतिता धूमश्च नयनेऽश्रुकुले कृतवान्॥)
धर्माधिकारी – मुखेन फूत्कारो नालिकया विना अग्निम् उद्दीपितुम् न शक्नोति। नालिकावायुः प्रबलं आदत्ते वह्निम्। अतो नालिकया फूत्कारं कुरु॥ [नालिकारूपेण आवर्तितं दानलेख्यं कल्याणसुन्दराय ददाति]
कल्याणसुन्दरः [पाणिना व्यवहितानतार्चिः निमीलितलोचनः फुल्लकपोलो नालिकया फूत्कर्तुम् आरभत। स्फुलिङ्गा उड्डीय नालिकोपरि न्यपतन्।

नालिका प्रज्वलिताभूत् । यदा नालिकार्चिः तस्य हस्तमस्पृशत् स हस्तमपकृष्य लेख्यं ज्वलन्तं पश्यति । अनलं शमयितुम् फूत्कारमकरोत् । फूत्कारेण अग्निः अधिकोद्दीप्तोऽभवत् । भूमौ प्रक्षिप्य वारिणा अग्निम् प्रशममनयत् । दानलेख्यम् दग्धं वारिप्रक्षेपेण च क्लिष्टाक्षरमजायत । तस्य चित्तविभ्रमश्चाजनयत् ।]

कल्याणसुन्दरः – स्वामिन् ! पितापि परलोकङ्गतः । अपरं दानलेख्यं न लेखयितुं पार्यते । किं क्रियतेऽधुना (पितुः शवान्तिकमागत्य मुक्तकण्ठमरोदीत् । बहुविधङ्करुणमाचुक्रोश । भृशं शशाप तारस्वरञ्च व्यलपत् । तस्य रुदितनादः स्पष्टं श्रुतः पार्श्ववर्तिभिः जनैः । क्रन्दनं तम् श्रुत्वा जनाः इतस्ततस्तत्र एकत्र-भूताः । भूमौ विचेष्टमानं भूसंसर्पणधूलिधूसरिताङ्गम् पर्यश्रुलोचनं तं दृष्ट्वा जना एकं राजपालं पप्रच्छुः 'किं भूतम् ?' "अस्य पिता मृतः । दुःखं हि बंधुभिः विनाभवो । विरहपर्युत्सुकेन मनसा असौ रोदिति विलपति च ।' तमुपसान्त्वनैरुपस्थापयितुमारभंत - तेषु एको धनपालोऽब्रवीत् 'शोको निगृह्यताम् । दैव-तंत्रकमिदम् । निगृह्यताम् बाष्पप्रसरः ॥'

कल्याणसुन्दरः – कथमहम् तस्य जनकस्य महोपकारस्य मोक्षम् कुर्याम् यो मां भयेषु अरक्षत् स्वपोष-निर्विशेषम् मां अपुषत् । तं दैवः मत्तो निष्ठुरम् आच्छिनत् । मम जीवनसारमाजहार ।

[एवम् विलप्य न स रुदिताद्व्यरंसीत् शोकबाष्पवेगः चास्य न उपशमङ्गतः । सोरस्ताडनम् व्यलपत् । अश्रूणि अमुञ्चत् ।]

धर्माधिकारी (एकस्य कर्णे जपति) – अस्य नास्ति

किमपि सर्वत्र व्यापृतिः। अस्य पिता स्वं परिग्रहम् मरणात् पूर्वं दानलेखमेकम् बालस्य अस्मै अर्पितवान् यतोऽयम् इहस्थस्तमनुकूलयितुम् यतम्। किन्तु तं स्वेच्छानुकूलं च वशीकर्तुम्। अपरं सुतं स्वनिराकरोत्। असौ दूरदेशे निवसति। दृष्टेः दूरम् मनसः दूरम्। अयं समुपजातहर्षो मां पाकगृहमनयत् जलपानाय। तत्र यावन्मुखेन उपधमति तावद् अग्निस्फुलिङ्गा उड्डीय अस्य मुखे पेतुः। तदायम् नालिकारूपेण आवर्तितेन दानलेखेन अग्निमुपधमितुम् उपचक्रमे। दुर्भाग्ययोगेन अग्निस्फुलिङ्गाः उड्डीय दानलेख्यम् प्रज्वालयन्। दानलेख्यश्च दग्धम्। नाधुना अस्य पिता सम्प्रति जीवितेषु योऽन्यम् दानलेख्यम् कारयेत्? असौ चिन्तामणिः शान्तः। कथमयं आत्मानम् भरिष्यति। अतोऽयम् पितुः देहविसर्जनेन अश्रेति समाधेयशोकशङ्कुः परिप्लवनेत्रो जर्जरितहृदयश्च जातः। तद्वियोगाश्रुः च विसृजति पितृपादानाम् मृत्युञ्च विलपति॥

धनपालः — ज्ञातं ननु अश्रुबिन्दून् पर्यासयतोऽस्य उन्मद्बाष्पभरमोहस्य शोकस्य कारणम्। कोऽपि कस्यापि मृत्युम् विलपति स्वसुखनाशमेव विलपन्ति सर्वे। तोयवाहः यदा जलं मुञ्चति तदा नन्दन्ति लोकाः। यदा तु विद्युता तेषां गृहाणि भस्मसात् प्राणान् हत्वा विलीयते तदा विलपन्ति सर्वे॥

# पंचमोऽङ्कः

[सुमेरुचन्द्रस्य गृहम्]

सम्भवनाथः – कथम् इदञ्जातम् ?

जिनदासः – एतत् सर्वं तु न जाने । निशायां भोजनं निर्वृत्य तूलगर्भंशयनं पल्यङ्कमास्तीर्य तूलिकायामुपधानमाश्रित्य सुखमशेत स्वामी । अहमपि स्व कोष्ठङ्गत्वा अनिद्राम् । प्रभाते शयनादुत्थाय क्षुरं निश्य वपनस्नानादिकं कृत्वा यदाहम् कार्यप्रवृत्तो ऽभूवम् तदाहं व्यक्तेऽपि वासरे स्वामिनम् शय्योत्थित इतस्ततो गच्छन्तम् गृहाभ्यन्तरे कुत्रापि नापश्यम् । स्वामी अस्वपीत् परंतु बाजारः निद्रामुद्रितम् तं विबोधयितुम् तद्दर्शनोत्कलिकया इहागत्यापश्यम् । उत्कीर्णकाष्ठमूर्तिरिव निश्चलो निद्रामुद्रितलोचनो निर्गतश्वासो मया अदर्शि । अहम् तमचालयम् परंतु मौनमाकलयन्निव न स किमपि आलपत् । स्वामिनः शांततया स्थितं शरीरं दृष्ट्वा अहङ्गत्वो भवते आख्यम् ।

सम्भवनाथः – (अश्रूणि वर्तयन्) अहम् तु पूर्वं तव विश्वासम् नागच्छम् । किमेतत् सत्यं स्यात् । प्रायः हृदयगतिस्तम्भनेन गतः स्वामी । यद् भूतं तद् भूतमेव । गच्छामि तावत् सर्वान् संबंधिनः सुहृदो ऽवगतार्थान् कर्तुम् ।

[सुमतिनाथः घटिकाधिककाले सर्वे संबंधिनो मित्राणि च समासीदन् सदनम् सुमेरुचन्द्रस्य । अन्येऽपि इतस्ततः संनिपतितुमारब्धाः । गृहाद् बहिरन्तः सर्वत्र सङ्कीर्णा विकीर्णा जनाः अदृश्यंत । दूरादागताः केचित् क्षितिरजोऽवगुण्ठिताव्यवसमूतयोऽपि उपस्थिताः सुमेरुचन्द्रेण सह मित्रत्वमापन्नाः । उदन्तो ऽयम् कर्णपरम्परया दस्य कस्यापि कर्णान्तरपृशत् संजातः ।]

नेमिनाथः – आसीत् स प्रख्याता ... नगरेऽस्मिन्

सम्भवनाथः – अयि जिनदास ! वयं स्वामिनः परः क्रियाः वर्तितुमुत्सुकाः । त्वं तु चरणदासमाहूय सर्वमिदमगारं पवित्रयितुम् शोधयितुञ्च निर्दिश। अंते च शववसनानि इमानि तूलिकां उपबर्हं कशिपु परञ्च अर्वाचीनम् शिरस्त्राणं सर्वाणि तस्मै समर्पय। शववसनानि सर्वदा महत्तराय एव दीयन्ते।

[सुमेरुचन्द्रस्य निर्गलितवसनमपिधानं निर्जीवदेहम् शवपटेनाच्छाद्य सर्वे प्रस्थिताः श्मशानभूमिम् प्रति। पितृकाननाद् अनुप्राप्ताः सर्वे सुमेरुचन्द्रस्य गृहम् । सम्भवनाथेन सह समवेदनां प्रकटयन्तोऽवाकिरन्।]

सम्भवनाथः – इदानीम् कार्याः सम्भागाः सर्वेम् तस्य ऋक्थम् हस्तीकर्तुं दानलेख्यव्यवस्थानुसारेण।

सुमतिनाथः – इदमेव कालानुरूपम् समुचितञ्च।

सम्भवनाथ – प्रथमं तावद् गच्छावः तस्य आपणं तस्य रूप्यकाणि स्वायत्तीकर्तुम्।

(प्राप्य च आपणम्)

सुमतिनाथः – द्वारं विष्कंभितं तिष्ठति ! कुत्रास्ति तालिका अस्य तालकस्य ? मया तस्य मृतस्य कोषाद् अपकृष्य स्व गृहे रक्षिता। आनयामि तावत्।

सम्भवनाथः (स्वगतं) – चञ्चलायते मे मनस्तस्य धनाय। (स्फाटितो दारुखण्डो द्वारस्य)

[सुमतिनाथः कुञ्चिकया सह प्रतिनिवृत्तः]

सम्भवनाथः (कुञ्चिकया द्वारमपावृत्य अग्रिमो धनपेटिकामुद्घाट्य ) – नास्त्यत्र किमपि। किम् कुम्भीलकेन हृतं स्यात् । द्वारं तु प्रतिबंधितं तिष्ठति।

गृहम् नीतँ भवेत्।

[गृहङ्कृत्वा सर्वत्र विचयनम् कृतवन्तौ]

सम्भवनाथः – कुत्रापि नास्ति तद्धनम् येन स कुसीदकवृत्तिमकरोद् जीविकाञ्चायोजयत् । किं सोऽसार उपढौकनाय इह अत्यजत् । किं स मह्यम् विभाजयांञ्चक्रे । किं स ......

सुमतिनाथः [तस्य वचनमाक्षिप्य] – सर्वम् गृहँ शोधय। कस्मिन्नपि कोणे निहितँ स्यात्।

सम्भवनाथः – नास्ति अत्र किमपि कानिचिद् उपकरणानि विहाय। मह्यम् संगीर्यापि न दत्तम् तेन किंचिद् मह्यम्। किमर्थम् न 'मम मनः त्वया सह निहपाशे बद्धम्' इत्येवँ विधां वाचाटताम् प्राकटयत्। (चाकचक्यमाणलोचनः) कचिद् अंतः निगूढ़ रक्षितँ भवेत्। भूमौ निचखान। खनित्वा निधेयँ प्राप्णीयम्। परंतु सर्वम् गृहम् इष्टिकाभि श्छन्नम्।

सुमतिनाथः – अनेन सेवकेन अपहृतँ भवेत्। रे जिनदास!

जिनदासः [आगत्य] – एष आगतोऽस्ति भवतः सेवकः।

सुमतिनाथः – किं त्वया अपहृतं श्रेष्ठिनो धनम्?

जिनदासः – न मया किमपि अपहृतँ गृहीतँ वा किमपि। वाद् न्यकेन यत किंचित् मह्यम् दत्तम् तदेव आत्तम्।

सम्भवनाथः – त्वया श्रेष्ठिना सह सौहार्द दृढ़ीकृतँ आत्मनः स्थैयस्तामापादयितुम्।

सुमतिनाथः – अपज्ञातः। वित्तलाभाय च।

जिनदासः – नहि नहि! यत् किमपि स्वामी कामितो

अयंच्छत्तदेवाहम् लब्धवान।

सम्भवनाथः – अपध्वँस रे मूढ़। किं अनृतँ निगदसि? कामँ याहि दिशो दश। नार्थो मे त्वयका। एवम् दुर्नयचेष्टितः ते नाहम् प्रीतोऽस्मि त्वयि।

सुमतिनाथः – कस्मैचिद् अधमर्णाय दत्तः स्यात्।

सम्भवनाथः – तस्य व्यवहारपत्राणि समीक्ष्य, कियद् धनँ तेन ऋणिकेभ्यो दत्तम्। गोप्याधिः बँधकम् कियद् अस्ति तस्य विनिमये तेन गृहीतम्।

सुमतिनाथः – परीक्षावहे तावत्। धनस्य सर्वथा अभाव एव तस्य पेटिकायाम् ? तेन भवितव्यमासीत् नैतदहमाशँसिषि। सर्वमेवद् अतर्कितमेव उपपन्नम्।

सम्भवनाथः – नाहम् एतद् अमँसि। इदम् तु आशाविपरीतमेव। अस्तु तावद् अवलोकयिष्यावः तस्य व्यवहारपुस्तकम्।

सुमतिनाथः – अस्यावलोकनेन इदम् अस्फुटद्, यत् स्वल्पमेव धनँ अनेन अधमर्णेभ्यो दत्तम्। अपरेण पात्राणि आभरणानि स्वल्पमेव सँति।

संभवनाथः – अधमर्णा धनँ मयि निक्षिप्य स्वकीयँ आधिम् लप्स्यँते। परंतु प्रचुरं धनँ न भविष्यति तस्। तेन नाहम् कुसीदवृत्त्या उपजीवितुम् प्रभविष्यामि।

सुमतिनाथः – अस्य स्थावरं धनम् तु किमपि नासीत्। केवलँ इदँ गेहमेव। शेषँ सर्वं जङ्गमँ धनम् आसीत्। तेनापि दानलेख्यगतँ धनँ आत्मनो विशति सहस्त्ररूपकाः प्रदर्शितम्। कुत्र तत् तेन निगूहितम्। आवयोः धनप्राप्तौ को विघ्नं समाचरत्। प्रच्छन्नभूमौ गुप्तस्थले कुत्रचित् स एकँ निलयमाकल्पयत्। परंतु न ज्ञातुम् शक्यते। इह तु अपास्य फल्गु नास्ति किमपि

मूल्यवान् ।

सम्भवनाथः – इदानीं आवासोऽयम् विपिनायते । सुमेरुचक्रोऽयम् नरकङ्कच्छेदनाकम् वा अहं तस्मिन् सर्वथा निर्व्यपेक्षोऽस्मि ।

सुमतिनाथः – मया तु तस्य जीवितकाले तं प्रति औदासीन्यमवलंबितम् । कामपि आभरणवल्लभां प्रसाधनप्रियां प्रणयिनीमू तेन धनं दत्तं भवेत् । अन्योऽ यशागातिरेकोऽतिभूमिङ्गतः स्यात् । प्रसक्तः गीतघोषे उदितमनोज्ञेन तेन कस्यैचिद् वाराङ्गनार्थं वितीर्णं भवेत् स्वप्रेम्णः सिद्धये ।

संभवनाथः – परंतु वार्द्धके वर्तमानस्य तस्य विषये एतदनाशङ्कनीयम् । स तु अखिलाहः आपणे एव उपविष्टोऽदृश्यत । आ ! हतोऽस्मि मन्दभाग्यः । [बाष्पपूरितदृक्] संपत् सहसैव उदेति नश्यति च । हा हंत (गलद्बाष्पधारः प्रमुक्तकण्ठमरुदत् । सुमतिनाथोऽपि मोक्षोच्छ्वासोऽश्रुभिः नयने मलिनीकरोति उन्मुक्तः तनादश्च विलपति ।)

# षष्ठोऽङ्कः

चरणदासः [रोषावेशस्खलदक्षरः] – कुत्र त्वम् भ्रमसि मध्यरात्रं यावद् वृषस्यंती वेश्यावद् विगलितलज्जः । यदि केनापि त्वं गर्भं ग्राहिष्यसे तदा नाहम् त्वत्प्रसूतिम् पालयिष्यामि । अतो नाहम् वाञ्छामि संतानम् । नास्ति मत्सविधे एतावद् धनं येनाहम् आत्मनो नव चापि भरणं कुर्याम् । त्वं तु असमशरविकलहृदया अङ्गसंस्कारं कृत्वा कङ्कतिकया केशान्

प्रमाद्य आत्मानमगर्हणीयम् काल्यां निशायां कालिकां शाटीम् परिधाय सर्वत्र परिभ्रमसि। यः कोऽपि त्वदर्थं धनं व्ययेत्तस्यैव त्वं भवसि। कामवासना-पूर्तये सर्वत्र परिभ्रमसि। अयं न गर्भोऽभिसारजन्यः

शरणदेवी [कुन्तलकलापगर्भान्तरे हस्तं निवेश्य] — अहं तु स्वसुः गृहङ्गताऽभवम्। सा मां विनोदकथाभिः इदानीं यावत् तत्र अवास्थापयत्। आवयोः सम्बन्धे नास्ति किञ्चिद् अशिष्टम्। वस्त्र निर्णेजनाय कालिका शाटी न शीघ्रम् मलिनीभवति॥

चरणदासः (उच्छृङ्खलश्मश्रु समीकुर्वन्) — मा वद कैतववाक्यम् [दण्डेन ताम् अभाययत्] भर्तुः परोक्षे निभृतदुराचाराभ्यस्तचित्तं त्वया पतित्वम् चेतसश्च विलुप्तम्। वल्लभम् निशीथे मिलसि। कार्यकालेऽलसायसि। अखिलेऽहनि सकलं गृहकार्यमपि मया एव सम्पाद्यम्। त्वं तु स्वपत्युः पराङ्मुखीभूता तरुणैः धनाढ्यैः सार्धं आत्मसमर्पणसंधानङ्कर्तुम् उद्यता। तव सुललिताङ्गसौष्ठवम् वीक्ष्य अनङ्गविकारेण स्पृष्टः कश्चित् त्वां सरभसमुद्धृत्य गाढमाश्लिष्यति। अन्येन सह भूसेवनप्रेमोद्भवं कृत्वा निकटं व्रजसि। अन्येन च प्रेमपीडितनाम्नेन नेत्रेङ्गितेनानुज्ञातां कामातुरताङ्कलयसि। एवम् गृहाद् गृहं प्रयाणेन त्वं कुत्रचिद् गर्भावर्तनम् प्राप्स्यसि॥

[शयिता पुनरुत्थिता]

चरणदासः — अस्य कशिपुनः कार्पासम् आकृष्ट।

(शरणदेवी उपबर्हगमाकर्षति)

चरणदासः — इदम् कशिपु अपि निर्दोषम्। अस्य कशिपुनः तूलं अस्मिन् उपबर्हणे भरित्वा कशिपुनः

निर्णेजनेन नवीनङ्कशिपु भविष्यति। अतः इदँ कशिपु निर्णिज्य आनय॥

शरणदेवी (कशिपु निर्णेनेक्ति)— उपबर्हणम् निर्णिज्य शोषयित्वा चानयमाहम्। पुनः किं क्रियेत?

चरणदासः—इदँ कशिपु विदार्य तत् तूलमपहृत्य एतदुपबर्हणम् नेन तूलेन भरितँ स्यूनञ्च मह्यम् देहि। (शरणदेवी कशिपु विदारयति। तूलराशेश्च मुद्रापत्र पुञ्जः पतितः।)

चरणदासः—कथमयम् भाग्योदयः?

शरणदेवी—नायम् भाग्योदयः। अयँ तु भाग्य-विस्तरः।

चरणदासः— कुतोऽयम् भाग्यविस्तरः। आः स श्रेष्ठी स्व धनँ मोषकाद् रक्षितुम् रात्रौ गृहमागत्य अस्मिन् कशिपुनि अपाहुत। एकस्यां यामिन्याँ सोऽकस्माद् हृदयगतिस्तम्भनेन मृतः। धनञ्च तस्य तत्रव कशिपुनि गोपितँ आवयोः हस्ते पतितम्। निवृत्ता बाधा आवयोः। सर्वं कलुषँ परिशमितम्॥ कियन्त्यो मुद्राः एताः?

शरणदेवी (गणयितुम् प्रवृत्ता) विंशतिसहस्राः।

चरणदासः—भाग्याभावदरिद्रोऽहम् कथमिदानीं परमात्मनो धन्यवादँ उच्याम्? तवापि मुखँ सुतरां चकास्ति। कथमहमात्मनः कृतार्थताम् आचक्षीय? न आयासम् इदानीं कस्मादपि अनूनौ। न कस्मादपि धनमपेक्षते आवाभ्यां सम्प्रति। त्यज इदानीं त्वम् अपाङ्गप्रविसारितलोचनान् कामिनो जनान्। सञ्जाता आवयोरस्वस्थताविनिवृत्तिः। न कोऽपि अधिको वित्तवान् आवाभ्याम्। नाहम् इदानीम् कस्यापि पुरः

हस्तं लम्बयिष्यामि। अपगतं आवयोः किञ्चनन्दम्। अहमपि कुसीदकवृत्तिम् करिष्यामि समाजस्थितिञ्च मेत्स्यामि एवञ्जातीयकेन अनुयोगेन। परमहं मनोऽनुग्रहविषये खलु किमपि उत्कर्षेण न न्यूनमेव। कः आत्मानं तुलयेत् मया सम्प्रति। अस्मिन् विप्रोऽहम् अपि उत्तमर्णो भूत्वा ऋणं दास्यामि। इतः परं न ग्रही-भूतपृष्ठेन परितो समाजनम् अपितु सुखेन आपणे उपवेशनम्। गताः ते दिवसा यदाहं पर्यभ्रमम्॥

शरणदेवी—धने लब्धे आवयोः संततिविच्छेदो मा भूत् इत्यपि आकाङ्क्षणीयम्। यदि श्रेष्ठिनः पुत्रोऽभविष्यत् तर्हि न तस्य धनम् एवम् नङ्क्ष्यत्। अन्यस्मै जनाय स नाचक्षीत् यत् स स्वधनं क्वशिनुनि निहन्ते परंतु पुत्रेण तु विदितमभविष्यत्। अतः पुत्रोऽभि-लषणीयो ऽन्यथा आवयोरपि धनम् एवमेव नंक्ष्यति। तव हस्तलम्बया न पुत्रसुखं दृष्टम् मया॥

चरणदासः—पुत्रे गाव्रपोः कार्यभारो लघूकरिष्यते पुत्रम् प्रतिहस्तम् वधावे आवाम् आनन्दङ्करिष्यावः। पुत्राभावे तुलामारोपयिष्यावः च मरुपदम्। पुत्रेण प्रसूतेन आवयोः सुखम् वर्धिष्यते। तवाभिलाषो मत्तोऽमवलंबिष्यते। तवोत्सङ्गतरङ्गवितपुत्रम् प्रेक्ष्य मम हर्षो आत्मनि न प्रभविष्यति। अत्रैव गृहभङ्गम् कृत्वा नूतनं गृहं निर्मास्यामि यस्य विभागेऽहम् कुसीदकवृत्तिमुपकल्पयिष्यामि॥

[मासाभ्यंतरे नूतनं गृहं निरमिमत चरणदासः। धनलाभप्रवृद्धोदयः कुसीदकत्वेषेण तत्रोपविष्टः।]

कल्याणसुन्दरः—पञ्चशतं रूपका अपेक्ष्यन्ते मया। चरणदासः—किमर्थम्?

कल्याणसुन्दरः – (आयततरं निश्वस्य) पिता मे मृतः। तस्य गतस्य अद्य उपसप्ताः मासाः। स एकेन दानलेख्येन सर्वं धनं मह्यमर्पितवान्। परंतु दौर्भाग्य वशाद् दानलेख्यम् अग्निना दग्धम्। अतो मया न्याया लये धर्माधिकारिणो यस्य ममङ्गम् दानलेख्यं पित्रा लेखितं दानलेख्यस्य साक्षिणश्च साक्षित्वं विधाय व्यवहारो कृतो यन्मम पित्रा सर्वं धनम् स्थावरजङ्गमं च मह्यम् दत्तम्। मम भ्राता सोमसुन्दरो नास्ति तत्र भागार्हः। तस्य व्यवहारस्य व्ययाय धनमपेक्ष्यते। यदि दानलेख्यं दग्धं नाभविष्यत् सर्वं धनम् मां आगमिष्यत्। दानलेख्यस्य हविर्भुजा दहनेन इदानीं मया धनम् व्ययीक्रियते व्यवहारनिर्णयाय। इति कालक्षेपः॥

चरणदासः – गृहाण एतत् पञ्चशतं। द्विकम् शतं वृद्ध्या एतद्धां प्रतिदेहि। ऋणमेकम् स्वहस्ताङ्कितम् मे देहि।

[कल्याणसुन्दरस्तथा कृत्वा धनम् गृहीत्वा गच्छति।]

चरणदासः – सर्वाङ्गलक्ष्मीभूषणा त्वङ्करस्मैचिदपि कार्याय न चेष्टसे। प्रतिदिनं प्रार्थ्यमानादयवा त्वम् भूषणैः विशेषेण सुषमां पुष्णासि। पूर्वं तु कृशीभूत देहा इदानीम् पुष्टावयवसम्पन्ना जाता। आहाराभ्यवहारो विशेषेण अभिरोचेत तुभ्यम्॥

शरणदेवी – नेदं कारणम्। अहमिदानीं धृतगर्भा फलप्रवृत्तौ उपस्थिता। मासद्वये प्रसोष्यामि।

चरणदासः – आम् ज्ञातं मया। यतः त्वम् मेदस्विनी सञ्जाता। गर्भफलम् त्वत्संभूतं ईश्वरेच्छया। पुत्रो भवेत्। आवयोः कुलम् पुष्णन्तु तेन अनुगृहीतम्

भवेद् इति मे प्रार्थना : मासानन्तरं त्वम् कठोरगर्भा भविष्यसि प्रसवोन्मुखा च; तदा गच्छ मातुः गृहे प्रसवाय। तत्र गत्वा बालाश्च मद्वचनाद् लालनीयाः वृद्धाश्च नमो वाच्याः। प्राप्तप्रसवा च पुनरागन्तव्या हि यथा अस्माकं व्यवहारः। अहं त्वां धनादेश द्वारा धनं प्रेषयिष्यामि। तोके जाते एवं तद्विद्वृत्तं प्रेषय।

[आपणे उपविष्टः चरणदासः]

चरणदासः – ऐ कल्याणसुन्दर ! किमिति विकृताननो मत्समक्षमनाभाष्यैव यासि। अहमनाभाष्यः खलु। कियती वाराणि त्वामहं ऋणप्रतिशोधनमयाचे ऋणशोधने न तथा एवं निश्चेष्टमवस्थातव्यम्।

कल्याणसुन्दरः – इदानीमहं दौर्गत्येन पीडितः जीवामि निर्विण्णश्च। न मे किमपि भृतिः। न मया वेतनं लभ्यते कुतश्चित्। अधुनातन्यां मे दशायां तु ऋणशोधनमसंभवमिदम्॥

# सप्तमोऽङ्कः

चरणदासः – (स्वगतम्) मम दारिद्र्यदशायां सा विषमशरज्वरेण यत्र तत्र भ्रमति स्म। केनचित् सह रागातिरेकः सञ्जातः। तेन सह विहितसंभोगा आपन्नसत्त्वा जाता। इदम् अपत्यम् तस्यैव भवेत्। कोऽपि अन्यः ताम् पवित्रयामास। तेन इयम् सत्त्वा जाता अयम् शिशुः तेन सह विहितमैथुनस्य फलम् भवेत् उत वा ममैव दारकः। नाहमस्मि अस्मिन् विषये निश्चितार्थः। आसीत् सा स्त्री जनापवादसंयुक्ता। अतः पुत्रस्यागमनेन प्रहर्षपरिप्लुतान्तःकरणेन न

आव्यँ मया। एवं हर्षं प्रतर्क रू। मम उपहासँ कुर्यात्। तत्र उत्सवे तस्याः आपमनावधि अहम् निरुद्धधः एव भविष्यामि यावन्नाहम् निश्चिनोमि यदेष ममैव पुत्रः। यदि शिशुको ममानुहरते तदा स ममैव नान्यथा॥

[प्रकाशम्] रे रामदास! गच्छाम्यहम् सिंहाचलम् चामुण्डीदेव्याः दर्शनाय। न मां किंचिद् प्रतिभाति तस्याः दर्शनात् विना। मम पत्नी सविस्तरमेकँ पत्रम् अलिखद् यत् सा सुषुवे कुमारमेकम्। अतः सा शातोदरी नितातँ कृशीभूता क्षीणदेहा च सञ्जाता। तत्र कंड्पत्रे च तया इदमपि उपन्यस्तम् यदहम् तु द्विजमादाय चामुण्डीदेव्याः उत्सवे सिंहाचलम् आगमिष्यामि। तत्र देवीदर्शनम् विधाय देव्याः प्रसादमाशिषश्च प्रगृह्य स्व गृहमागमिष्यामि। अतो ऽहम् अन्यकार्यातिपातँ न सहे। अहमपि गच्छामि तत्र। लोकानामपि अहमशृणवम् यत् परस्कोटयः जनास्तत्र संमिलिताः॥

[चरणदासः सुते नानाक्रीडनानि भार्यायां चाऽऽभरणानि वर्षितुम् यात्रायै प्रस्थितः। शरणदेवी बालकमुरसि दधती अन्नपिटँ शिरसा बिभ्रती दोल- गीतँ गायँती चामुण्डीदेवीदर्शनाय प्रास्थित। कल्याण सुन्दरोऽपि उत्सवे संमिलितुम् प्रस्थितः। चामुण्डी देवीमन्दिरम् सिंहाचलकूटे वर्तमानँ उत्सवावसरे परिक्रमम् कुर्वद्भिः अन्यैश्च दर्शकैः जनैः पर्यपूर्यत। शिलाविभङ्गैरुपकल्पितमेकम् सङ्कटँ गिरिपादमूलात् शिखरं यावद् नयति स्म जनान्। उत्सवादसरे सङ्कटँ इदम् जनैः सङ्कीर्णमासीत्। शरणदेवी शिशुम् क्रोडी-

कृत्य देव्याः दर्शनाय गच्छति स्म। चरणदासश्च देव्याः दर्शनम् विधाय अधः आयाति स्म। चरणदासेन जन संमर्दे उत्सङ्गितदारकाद्याः शरणदेव्या अव्यक्ताकृतिः अवालोकि। सापि चरणदासमपश्यत्। अन्योऽन्यम् स्पष्टं दर्शनम् दातुम् जनसंमर्दं विहाय तौ सङ्कटतटं आसेदतुः। चरणदासो देहबंधेन आत्मसंवादिना आकृतिविशेषेण पितुः अनुहरमाणम् आत्मना सह भूयिष्ठम् उपमेयकां तञ्च सुतं वीक्ष्य ममैव एष पुत्रो अद्य अस्यां दृष्टसंतानोऽभवम् पुत्ररत्नञ्चालभे इत्युच्चै राघुष्य परमानन्देन पल्लवितचेता प्रमोदाश्रुपूर्णः उज्झम्पं कृत्वा सङ्कटतटान्निपत्य भृगोः लुठन्उपत्यकां प्रपेदे गतप्राणश्चाभवत्॥

शरणदेवी इदं दृष्ट्वा मुक्तैकताराक्रन्दा लुप्तसंज्ञा सङ्कटतटे पपात भृगोः लुठन्त्याश्च जीवितमुत्सृष्टम्॥

व्यतिकरं इमं वीक्ष्य जनाः 'किमिदम्' इति कृत्वा तस्यां दिशि अधावन्। तेषां अग्रेसरः कल्याणसुन्दरः चरणदासं अभिज्ञाय सपुत्रभार्यं निर्गतप्राणं तं लुठन्तं वीक्ष्य मुक्तोऽहं ऋणशोधनाद् इत्यविच्छिन्नपरमानन्दो वृत्ताकारेण नर्तितुमारेभे। सङ्कटतटं प्राप्य अधो लुठन् उपत्यकां प्रपन्नो गतजीवितश्चाभवत्॥]

... * ... * ... * ... * ... * ... * ...

यदा कश्चित् प्रथमेगणीयोऽभ्यर्चितः सामान्यो नर मतिः यस्य प्रख्यातिः देशमिदमलङ्करोति कुत्रचिदागच्छ- ति तदा बहुसँख्याका भक्ताः प्रोत्साहातिशयपरिस्पन्द्य मानास्तस्य वाचिकँ श्रोतुम् मनः कुर्वंति तस्य सँनिधिं उपेतुञ्च प्रतिष्ठँति तमुपसीदँति च । किंचित् कालँ श्रद्धापूरितचेतसा तस्य सत्यां पथ्यां अथ्यां वाचँ शृण्वँति । परंतु यदा स स्व वचो न सँहरति 'इदमपि विवक्षामि मन्निर्दिष्टया दिशा कार्यँ प्रवर्तितव्यँ तर्हि नियतो जयः .. इदमपि अभिधित्सामि ...... इदँ अनावेद्य न मे परितोषो भवति ...' इत्येवँ तारतम्येन भाषणँ कारं २ न विरमति तदा श्रोतृगणाः उद्विजन्ते विहितबहुलसाधुवादाय मनुष्याय इव च तस्मै भृशँ तालिकानादँ कुर्वंति येन स करतलनादेषु अविभावित वाक् भूत्वां स्वा गिरोऽवसाययेद् विलुप्तवाक् च भवेत्

एतादृशाः केचिदन्ये दृष्टांता अत्र प्रस्तूयँते –

यदा भवतः कश्चित् सुहृद् भवँतम् भोजनेन निमँत्रयेत तदा भवान् तस्य गृहङ्गत्वा तस्य भोजनँ अधिकाधिकँ भुनक्तु । तदा स मम भोजनमस्मै भृशँ अरोचत इति मत्वा प्रतीतो भविष्यति । खादँ २ यदा अंते वमनँ भविष्यति तदा न मे भोजनमस्मै अरोचत इति कृत्वा स दुर्मनाः भविष्यति ॥

यदा भवान् कमपि सुहृदमालिङ्गेत्तदा स्वप्रेमाति शयँ प्रदर्शयितुम् तँ तथा निष्पीडयतु यथा तस्य अस्थीनि भज्येरन् । यथा अजगरः स्वकुण्डलैः वन्य सत्त्वस्य प्राणान् हरति तथैव तस्यापि असवो निष्क्रामेयुः ॥

# काव्यकुंजम्

मम प्रेयःसुहृदःसुधर्कः श्लोको रचितो मया ॥

पञ्चचामर

गतोऽस्म्युत्तरभारतँ यदाहँ मद्रदेशतः
तदा मे कुञ्जमन्दिरँ कुतूहलँ नवोत्थितम् ।
प्रपूरयद् आनन्दयत् स्वशिल्पकर्मविभ्रमैः
मनो मे दुःखनिर्भरं व्यलीककष्टपीडितम् ॥

इन्द्रवज्रा

धूमायमानम् निजकन्दराभ्यो भूमेरुदञ्च इव मानदँडः ॥
भूमानमेनमगज्जनानाँ कूर्मायमाणँ भूतलोपरिष्टात् ॥

उपेन्द्रवज्रा

निनदमेनँ गिरिगह्वराणाँ सरदमूलँ स्थगितांतरालम्
विषादमापत्स निशम्य दीर्घं निषादराजस्तुवनांतराणां

इन्द्रवंशा

प्रीतोऽस्मि राजन् ते नयेन चारुणा
नीतोऽस्मि येन हम् लयम् शारारुणा ॥
शिल्पँ यथा काष्ठे कृतम् सुकारुणा
छेदश्च निर्भेदश्च प्रापि दारुणा

शार्दूलविक्रीडितम्

येषा जन्मनि हर्षमोद निचयैः मोमुह्यमानः पिता
आनन्दातिशयेन वारि विसृजन भूमौ लुठन् दृश्यते ।
तेषां भाग्यविपर्ययेण नियतँ लुप्तश्रियां जीवने
आशाभङ्गपराजितेन मनसा मृत्यौ सुखम् मन्यते ॥

तूणकम्

निर्वृतम् स्वदेशजँ हि पश्य भक्तपूरितम्
चारुतम् मनोहरं मनोज्ञवेषधारिणम् ।
छुङ्गौघवासिनम् सुशोभितम् परिष्कृतम्
स परां प्रसन्नताम् अवाप देशनन्दनः ॥

लयः

मूषणकुण्डलमँडितया नदीनीरतटे विहरंतम् ।
रसिकसमागमखँडितया विट्जारजनैः विचरंतम् ॥
सखि ! शमय मम कामविकारम्
रमय मया सह जारसुतँ तँ मोचितविविधविचारम् ।
दृष्टिरतिर्यक्प्रेषितया तम् नयननिकोचकुर्वाणम् ।
स्वादुमधुरपरिवेषितया तम् बिभ्रईंगरिमाणम् ॥
सखि ! शमय मम कामविकारम्
रमय मया सह जारसुतँ तँ मोचितविविधविचारम् ॥

पुस्तकमिदम मया अखिलम् कारागारे प्रणीतम्
यदाहँ न्यायालयावज्ञाहेतोः मद्रदेशोच्चन्यायालयेन षण्मासमासेधँ रु. ५००) धनदण्डञ्च दँडितोऽभवम् न्यायाधीशौ क्षमायाचनाद् दण्डनिराकरणँ मे प्रतिश्रुतवन्तौ परंतु नाहम् क्षमां अयाचे । तदा मया ग्रँथसमाप्तौ अयम् श्लोको निरमायि —

आर्या

नष्टे वित्ते किं परिहाणम् ? कारागारो मे उद्यानम् ।
त्यक्ते प्राणे मे निर्वाणम् । धर्मे याते निरयवितानम् ॥
धर्मरक्षिनाः युध्यध्वम् । धर्म्ये मार्गे योद्धव्यम् ॥

इति शम्

... * ... ... * ... * ... * ... * ... *

## HOTCH POTCH

This is a miscellaneous, discursive and interesting collection of essays by the author. The subjects range from anything to everything. They are treated with an inexhaustible fund of gaiety and good humour and packed unobtrusively with learning. (*Hindustan Standard*).

The book includes the wit of Oscar Wilde, poetic flavour of J M. Barrie and animal spirits of W W. Jacobs. The author has really in his possession a great variety and power of expresssion. (*Modern Review*).

The papers in the book are well-written and should interest a large circle of readers. (*Hindustan Review*).

For satire HOTCH POTCH is hard to beat. (*My Magazine of India*).

There are bright chapters in the book which are really pleasing to read. The author is a writer with promise. *Orient Illustrated Weekly*)

I am glad to add HOTCH POTCH to my shelf of book (*Pearl S. Buck. Nobel Prize Winner*)

It is not a hotch potch of subjects but hotch potch of styles also that are exhibited in the book. One thing which is obviously manifest is abundant humour which puts every reader to laugh. (*Kashmir Chroniele*)

The author shows originality, naive humour and creativeness. (*Punjab Times*)

## TITTLE TATTLE

A delightful diversion, that is how one might describe this little miscellany of short stories, sketches and reflections. The stories centre round sophisticated society, social problems, intimate lives and even frivolities, with a generous sprinkling of humour. Those who seek to have a glimpse of gay and brilliant city-life will find much to cater to their taste. There is an occasional flash of wit and brilliance, poetry - romantic and mawkishly sentimental, the sensual in human nature, exposed to its dizzy heights This small book is packed with entertainment for an idle holiday and good humour for a vacant hour, (*Hindustan Times*)

Written in a quaint and humorous style, it will no doubt refresh the mind of the general reader. It will provide plenty of fun for those who care for an entertaining atmosphere and note, (*Hindustan Standard*)



This book consists of ten sketches or short stories narrated with spirit. The stories are realistic and varied by short disquisitions on general topics. Scraps of humour

are inserted between the longer narratives. It is a genial companion for an idle hour. (*Indian Review*)

An hour can be whiled away easily by reading this book which tells stories touching life at all odd corners and angles. Some of the stories and jokes in this book are really entertaining. (*Sunday Times*)

The author is a venturesome writer. His colourful sketches from life make interesting reading. His vocabulary seems to be extraordinarily wide. He shows infinite promise. (*Liberator*)

It provides a fund of humour to the reader. The author has a facile pen and builds his words with the ease of a trained mason (*Free Press*)

It contains a bunch of humorous stories and a couple of skits. (*My Magazine*)

## SCIENTIFIC HUMOUR

The author has a very facile pen and is immensely knowledgeable. "Hotch Potch", "Tittle Tattle", "The Third Religion", "The Last Prophet", My Heavy Days", are the titles of the other books he has written. His book "Tittle Tattle" was very favourably reviewed by almost all the leading news papers in the world, including *News Chronicle* and *New York Herald Tribune.* Noble Prize winner Thomas Mann has said about the book "Tittle Tattle": "The author's humour is of that robust variety that finds no subject too trivial or tco repulsive to be made into an object of laughter" Surely, such warm sentiments could not have been used if the product of the author's pen had not been so engrossing and excellent. The book under notice, "marks a departure from the established modes of literary writing and treads a new path", to quote the author's own description of the book "The acquisition of knowledge is unpleasant while humour is pleasant and gripping If humour is linked to the dull and drab data of knowledge, it becomes embedded in the memory." This is the convinced opinion of the author and we cannot but fully agree with his view. Being thus convinced, the author has with a missionary spirit and crusading zeal. to educate and also to entertain, written essays on a variety of subjects like Geology Astronomy, Botany, Zoology, Chemistry, Physics, Psychology, Philosophy, etc. These essays are published in this book under notice. One cannot but wonder at the author's erudition, the utter simplicity to which he reduces complicated subject matters, his original views, sparkling humour and superb sarcasm. (*My Magazine*)

# मोद के मोदक

## (पत्रसमीक्षा)

पुस्तक ग्यारह अध्यायों में विभक्त है, हर एक अध्याय स्वयँ में स्वतँत्र एवँ अपनी विशेषता लिए हुए है। पुस्तक के विषय का अध्ययन करने से पता चलता है कि लेखक हास्य-व्यँग्य के कुशल कलाकार हैं।

प्राचीन साहित्य को लेकर 'हमारी काव्य प्रतिभा के उदाहरण' लेखक ने अपनी मौलिक व्याख्या के साथ व्यँक्त किये हैं। 'वेद की महिमा' नामक अध्याँय अवसरवादियों के लिए रक्षा कवच सिद्ध हुआ है। 'भगवान का पत्ता' में जातिसङ्गठन और उस का प्रसार किस प्रकार किया जा सकता है यह सरल और हास्यमय वातावरण में प्रस्तुत किया गया है। इस में 'जासूसी उपन्यास'; नाट्यकला' आदि अपना महत्त्वपूर्ण स्थान रखते हैं। वर्णनशैली प्रभावोत्पादक, हास्य रस प्रधान तथा भाषा अलङ्कार-मय होते हुए सरल है। दक्षिण भारत से इस प्रकार का यह मौलिकता एवँ विविधता लिए हुए पहला ही प्रकाशन है। लेखक अपने इस प्रयास के लिए साधुवाद के पात्र हैं॥ (हिंदी प्रचार समाचार)